# BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED

UNDER THE SUPERINTENDENCE

OF

THE ASIATIC SOCIETY OF BENGAL.



NEW SERIES

Nos. 3[illegible], 321, 322, 323, 324, and 334.

---

# Sáma Veda Sañhitá,

WITH

THE COMMENTARY

OF

## SÁYANA ÁCHÁRYA.

EDITED BY

PANDITA SATYAVRATA SÁMAŚRAMÍ

EDITOR OF THE HINDU COMMENTATOR.

---

VOL. II.

Calcutta.

---

PRINTED BY N. K. SIRCAR AT THE GANEŚA PRESS

1876.

# सामवेदसंहिता,

तत्र

## छन्दआर्च्चिकः,

तत्रापि आग्नेयैन्द्रेति पर्व्वद्वयात्मकः

अध्यायचतुष्कः प्रथमोभागः

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः।



श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया


अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन


टीकितो यथावसरं शोधितश्च।




कलिकाता

गणेशयन्त्रे मुद्रितः

शाकाः १९१७।




## ॥ आर्चिकस्य परिच्छेद-सूची ॥



## ॥ गेयगानस्य परिच्छेद-सूची ॥

## ॥ छन्दआर्चिक-परिशिष्टभूतस्य आरण्यगानस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-परिशिष्ट-परिशिष्टरूपस्य स्तोभस्य परिच्छेद-सूची ॥

## ॥ अथ छन्दआर्चिक-द्वितीय-परिशिष्टस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-तृतीय-परिशिष्टस्य-परिच्छेद-सूची ॥



## ॥ अथ सायणभाष्यस्य परिच्छेद-सूची ॥



## ॥ छन्दआर्चिकस्य छन्दः-सूची ॥

---

## ॥ छन्दआर्चिकस्य देवता-सूची ॥

---

## ॥ छन्दआर्चिकस्य ऋषि-सूची ॥

## ॥ मन्त्राणामकारादिक्रमेण सूची ॥

पारच्छेदः पृष्ठ

परिच्छेदः

परिच्छेदः पृष्ठ

परिच्छेदः पृष्ठ

परिच्छेदः | पृष्ठं

परिच्छेदः ... पृष्ठं

---

॥ नमः सामवेदाय ॥

# सामवेदसंहिता।

## अथ पञ्चमाध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्या-तीर्थ-महेश्वरम् ॥ १ ॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः।
उच्चातइति गायत्र्यश्चत्वारिंशच्चतुर्युताः* ॥ २ ॥

---

* गतमाग्नेयं पर्व, गतञ्चैन्द्रम्; इदानीमिदं तृतीयं सम्प्रवर्त्तते। अत्र पर्वणि सोमस्य देवस्य संस्तुतिः श्रूयते, प्राधान्येनेति यावत्। अस्ति सोमः यज्ञार्थाभिषुतः ओषधि-विशेषः—

"सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिम्।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन॥"
(ऋ० १०, ७, ६, ४)

-इति श्रुतेः. "सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिमिति, वृथासुतमसोम-माह—सोमं यं ब्रह्माणं विदुरिति, न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्"—इति च यास्ककृत-तद्व्याख्यानात्। स एव सोमः पवमान इत्युच्यते पूयमान इति च तदर्थः। अस्ति च सोमश्चन्द्रमावाचकः, "सोमो रूपविशेषैरोषधिश्चन्द्रमा वा"—इत्यादि यास्कोक्तेः (दै० ५, ५)। तदत्र कतरस्य ग्रहणमित्याशङ्कां वारयितुं पवमानस्येति विशेषणम्। एतेन चन्द्रमसो व्यावृत्तिः। एवञ्चैव पर्वणि यावन्त ऋचः श्रूयन्ते विशेषणेन सामानि

तत्र प्रथमे खण्डे—

सैषा प्रथमा।

३ १ २ ३ १ २र ३ १ २र
उच्चातेजातमन्धसोदिविसद्भूम्याददे*।
१ २उ ३ १ ३ १२
उग्रँशर्ममहिश्रवः॥ १ ॥ १†

५ ४ २र र १ ७
श्रोम्॥ (आजिगम्॥) उच्चा। तेजा३तामन्धासा२ः।
१ र र २ १ २ १ २
दिविसद्भूम्याददाइ। उग्रँश्चा२३र्मा ३। मा२ह्वा२३४।
५र र २ ३ ५
औहोवा। उप्। आ२३४वाः॥ १॥

२ १र ५ २ १ ५
(आभीकम्॥) उच्चाति२३४जा। तमन्धा२३४साः।

---

सर्वासामेवासां पवमानः सोमो देवतेत्थं बोधितव्यं दं—पावमानं पर्वेति। "उच्चाते"-इति पञ्चम-द्वितीय-चतुर्थस्य प्रथमा ऋक्, इयमेवास्य पर्वणोपि प्रथमा; एतदादि-षष्ठ-प्रथम-द्वितीयान्तिमाम्नाः दशचतुष्टयात्मिकाः चतुर्युताश्चत्वारिंशदृचः गायत्र्यः गायत्रीच्छन्दस्काः।

* "दिविषद्भू"-इति ऋ०।

† उ०१,१,८,१ = ऋ०७,१,१९,५=आर०१,२,२२;— २,१,१९ —३,१,१२ = क०१,१,१;—२,१,१२;—६,१,९—१०;—७,१,१२;—८,१,१२;—१०,१,१०—११;—११,१,१४;—१२,१,१—२;—१२,२,७;—१३,१,१७;—१५,१,३-४-५;—१९,१,११;—२०,१,६-७-८—९;—२०,२,१४=ज्या २,२,१।

२ १　　५　२ १र　　२ १　　१　१　२
दिवाइसा२३४ङ्का । मियादृदाइ। उग्र९शा२३र्मा। महाये

१　३　५र र　　३ १ १ १ १
३। आ२वा३४ औहोवा। वा२३४५इ ॥ २ ॥

५र र　र र　　२　२
(ऋषभपावमानम् ॥) हाहाउच्चातेजा। हा३। हा-

१　३　५　२ १ र　२　२　२
३इ। तामा२न्धा२३४साः। दिविसङ्गिमिया१दा३दे। उग्र९

३　५　१ २　४　५　६　५
शा२३४र्मा। ओमो३। महोवा। आ५वोई हाइ ॥ ३ ॥

१　र र　　र　४　५
(आभीकम् ॥) ऊ२३४च्चातेजा५। तमौ२होन्धासाः।

२ १　र२　२　२　२　　२　५　१ ऽ　२
दिविसङ्गिमिया१दा३दे। उग्र९शा२३४र्मा। माहा३उवा

२　५
३४३। आ३४५वो ई हाइ ॥४॥

५ र र　　२ १　　　१र ऽ
(वाभ्रवे द्वे ॥) उच्चातेजा। तम। धासा२३ः। ओमो३-

२　१　२र　　१ २　　१र ऽ　२　१
वा। दिविसङ्गि। मियादा१दे२३। ओमो३वा। उग्रा९

२　　१र ६　२　१　३　५र र　२
शा१र्मा २३। ओमो३वा३। मा२हा२३४औहोवा। अवा३-

१ १ १ १ १
ई २३४५ ॥ ५ ॥

५र र　　२ १　　२　　१　२र　　१र
उच्चातेजा। तमन्धा२३साः। दिविसङ्गि। मिया-

दार२३दाइ। ऊग्रा२३ऽहाइ। ग्रामा३हाइ। मद्दा ३ होये-
३। आर२ वा २ ३ ४ औहोवा। म्वा २ ३ ४ भौ॥ ६॥

(इन्द्राण्याः साम॥) उच्चातिजातमा। धासा२३ः।
ओमो३वा। दिविसद्भू। मियादा१दे२३। ओमो३वा।
उग्रा३ऽग्रा१मा२३। ओमो३वा। मद्दाये३। आर२वार
३४औहोवा। ऊ२३४पा॥ ७॥

(शैशवे द्वे॥) उच्चातिजातमन्धासाः। दिविसद्भूम्याद-
दाइ। उग्रऽग्रा२३४र्मा। मद्दा३इआ५वाई५ई॥ ८॥

उच्चातिजातमन्धाईसाः। दिविसद्भ। म्यादार३दाइ।
उ। ग्रऽग्रार३र्मा। मद्दा२। हा२इ। औ३हो३१इ।
अवा२ः। हा२इ। औ३हो३१इ। इया३होइ। इयो२३
४५वाई५६। ऊ२३४५॥ ९॥

(दोहसाम॥) उच्चा३४औहोवा। तेजा२। तमा३४५।

३ ५ २ १ र र २र १ ० २ ३
धा२३४साः। दिविसद्भूम्याददे। उग्रꣳशार२र्मा। महि

२ १ २ ४ ५ ४
श्रवो। औ३होवा। हो५इ। डा॥ १०॥

५ र र र र र र र ५
(दोहीयसाम॥) उच्चातेजातमन्धसोदोहाइदोहाईए।

२ १ र र २र ऽ २ ० २ २ १
दिविसद्भूम्याददे। दो३हाइ। दो३हा३ए। उग्रꣳशार३

२ ऽ २ ऽ २ २ १ २ १
र्मा। दो३हाइ। दो३हा३ए। महिश्रा२३वा३४३ः। ओर

३४५इ। डा॥ ११॥

३ २र १र ४र ५ २ १
(इन्द्राण्याः साम।) उच्चातेजातमन्धसाः। दिवाइ

५ २ १ २र १र ऽ २ ऽ २
सा२३४द्भू। मिया२ददे। ओम्। ओ३वा। ओ३वा।

१ २ १ २ ऽ २ ऽ १
ववा२३होइ। उग्रꣳशार२३र्मा। ओ३वा। ओ३वा।

१ १ २ ३ २ १ ऽ ३ ५ र र २
ववा२३होइ। महिश्रवोर। या २ ३ ४ औहोवा। ययु

३ १ १ १ १
रे२३४५॥ १२॥

५ र २ ४र ५
(आमहीयवम्॥) उच्चाता३इजातमन्धसाः। दिवा

१ १ २ १ २ १ २ १
इता२दभू१। मिया२३इदाइ। उग्र२शर्मा। मह्वा-

२ १२ १११
२३इ। अवाउ। वा३। स्तौषि३४५॥ १२॥ १

अमहीयुर्ऋषिः*। हे "सोम!"† "ते" तव सम्बन्धिनः "अन्धसः" रसस्य‡ "उच्चा" उपरि¶ "जातम्" जन्म।

---

* "आङ्गिरसः" इति ऋषि-नैगेयः।

† "सोमः" निघण्टौ दैवतकाण्डेऽन्तरिक्ष—विभागीयस्तुतिंभाक्तो देवः, वायु-साहचर्याच्च भज्यते, यथा च राजधानीस्तवनेन भवति राज्ञः स्तुतिः, भवति च मासस्तवनेन वर्षस्य स्तुति; तथैवास्य स्तवनेन वायोरेव स्तुतिः। तथाहि—

"यत्वादेवप्रपिबन्तितदाप्यायसेपुनः।
वायुःसोमस्यरक्षितासमानांमासआकृतिः॥"
(ऋ० १०, ७, १, ५)

"यत् त्वा देव! प्रपिबन्ति तत् आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा। वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा। समानां संवत्सराणां मासआकृतिः"-इत्यादि यास्ककृतं तद्व्याख्यानम्। अतएव "तिस्र एव देवताः (नि० दै० १, ५)"-इत्याद्युक्तिरदोषा। स च ओषधि-विशेषः, तथाहि "ओषधिः सोमः (सुनोतेर्यदेनमभिषुण्वन्ति) बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन"-इत्यादि नि० ११, २-३-४-५। स च दुग्धाभ-रस-विशिष्ट-वल्लीभ्यः क्षरित-पदार्थः सुतरां दुग्धाभरसरूपः, तथाच श्रूयते—"सोमोदुग्धाभिरक्षाः" (ऋ०३,२,५, ५ द्वितीयः पादः) "सोमो दुग्धाभ्यः क्षरति"-इति च तद्भाष्यम् (५, ३)।

‡ "अन्धइत्यन्ननामाध्यानीयं भवति। * * *। तमोऽप्यन्धउच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तमइत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव।"-इत्यादि नि० ५, १।

¶ उच्चैरित्यर्थे उच्चेति, तस्यैव "निपातस्य (६, ३, १३६)-इति दीर्घं रूपमुच्चा-इति।

अथ द्वितीया ।

२　२　३　१　२　३　१ १　　३　१　२
स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ।
१　२　३　१　२　३　२
इन्द्रायपातवेसुतः ॥ २ ॥ २ *

१र　　२　　१　　२　　१　२　र
(आजिगम ॥) स्वादाइष्ठाया । मदाइष्ठाया । पवस्वसो ।
१　२　　२　　१　　२　　१　　२　　१
माधा१रा२३या । इन्द्रायापा । तवाइसू२३ता३४३: । ओ
२३४५इ । डा ॥ १४ ॥

अपिच । "दिवि" द्युलोके "सत्" विद्यमानम् "उग्रम्" उद्गूर्णम्† "शर्म" सुखं‡ "महि" महत्¶ "श्रवः" अन्नञ्च§ "भूम्यादरे" [इत्यत्र यमामनन्ति । विसर्जनीयलोपः सांहितिकः] भूमिः भौमजन्य: अस्मादृशः; भूमिष्ठैरादीयतइत्यर्थः ॥ १ ॥ १

---

* उ० १,१,१५,१ = ऋ० ७,७,१६,१ = आर १,२,३ ;—३,१,७ = ऊ० १,१,८ ; —८,२, २० ;—१०,२,१० ;—११,२,७ ; —१२,२,४ ; —१३,१,९ ;—१८,१,१५—१६ ;—१९,२, १८ ,—२०,२,२० ;—२१,१,२० = ऊह्य २,१,२ ;—४,१,१२ ;—४,२,१८ ।

† 'उग्रम् बलवत्'-इति वि० ।

‡ 'शर्म शरणम्'-इति वि० । शर्मेति गृह-नामसु चैकविंशतितमं पदम् नै० ३, ४ ।

¶ महत्, महः, महिः-इति पाठभेदेन पठ्यते नै० ३, ४, १ ।

§ "श्रवः"-इति अन्ननामसु चतुर्थं पदम् ( नि० २, ७) ।

२र १ १ १ २ १
(सुरूपम्॥) स्वादिष्ठया२ इया२इया। मदिष्ठा
१ १ १ २र १ र १
या२। पवस्वसो२। इया२इया। मधाराया२। इन्द्राया
१ १ २१ २ १
पा२। इया२इया। तवाइसू२३ता३४३ः। ओ२३४५इ।
डा॥ १५॥

२र १ १ २ १
(सुरूपोत्तरम्॥) स्वादिष्ठयौहो२। इया। मदिष्ठा
१ १ २र र र १
या२। पवस्वसौहो२। इया। मधाराया२। इन्द्राय
१ ३१ २ १
पौहो२। इया। तवाइसू२३ता३४३ः। ओ२३४५इ।
डा॥ १६॥

२ २ ५ २ ऽर १ ७
(जमदग्नेः शिल्पे द्वे॥) ओइस्वा२३४दी। ष्ठया३मादिष्ठ-
२ ३ ५ १ २र १र २ २३ ५
या। ओ२३४वा। पवस्वसोमधारया३। ओइ२३४न्द्रा।
१ ३ ५र र २र ३ २
या२पा२३४औहोवा। तवेसुताऽ१ः॥ १७॥

३ २ ३ ५ २ऽर १ ७ २ ३
उऊवाइ। स्वा२३४दी। ष्ठया३मादिष्ठया। ओ
५ १ २र १र २ २ ४
२३४वा। पवस्वसोमधारया३। उऊवाइ। इन्द्रा५यपा।
१ ३ ५र र ३ ५
ता२वा२३४औहोवा। सू२३४ताः॥ १८॥

४र ५ २ १ २
(सᳲहितम् ॥) स्वादाइष्ठया। मदिष्ठया२। पावा
४ ५ २र १ २ ४ ५ ५ ४
३स्वासो। मधारया२। आइन्द्रा३यापाई। हाउ। त-
वा५इसुताउ। वा॥ १९ ॥

४र ५ र ४ ५ र४५ र ४र र ४
(शकुलः॥) स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ।
४ २ १ ३२
द्रा५यपा। तवा२इ। म२। तवा२इ। ऊ२। तवा३४
५र र ३ ५
औहोवा। सू२३४ताः॥ २० ॥

५र र र र ४ ५ २ २
(गम्भीरम् ॥) औहोह्रम् हाणहिया। हा३हाइ।
१र २ २ ५ २ ३ ५ ५र र र
स्वादाइष्टाया। मा२३४दो। उँइमा२३३दो। औहोह्रम्-
र ४ ५ २ २ २ २ ३ ५
हाणहिया। हा२हाइ। ष्ठयापाव। स्वा२३४सो। औ
३ ५ र र र र४ ५ २ २ १
स्वा२३४सो। औहोह्रम् हाणहिया। हा२हाइ। मधा
२ ३ ५ २ ३ ५ र र र र४ ५
रयाँ। ई२३४न्द्रा। औई२३४न्द्रा। औहोह्रम् हाणहिया।
२ २ १ २ ३ ५ २ ३ ५
हा२हाइ। यपातवाइ। सू२३४ताः। ओइसू२३४ताः।
र र र र ४ ५ २ २ ५र र २१
औहोह्रम् हाणहिया। हा२हा३४। औहोवा। ई२
१ १ १
३४५॥ २१ ॥

अथ तृतीया।

१ १ २ १ २ ३ १ २ ३ २

वृषापवस्वधारयामरुत्वतेचमत्सरः।

३ १ २ ३ १ २

विश्वादधानओजसा ॥ ३ ॥ ३ *

४र ५ र ४ ४ २

(संहितम्॥) स्वादिष्ठयाम। दा५इष्ठया। पवा२।

१ २ १ १ २ १

स्वा२३सो। मधा२राया। आ२३इन्द्रा। या२पा।

१ २ ५

तवा२३। हाउवा३। सू२३४ताः ॥ २२ ॥ २

५र २र १ २

(सोमसाम॥) वृषापवा। स्वधाराया२। मरुत्वताइ।

२ १ २ ३ ५र र २

चमत्सा२३राः। वाइश्वा२३। दा२धा२३४औहोवा। न-

१र ३ १ १ १ १

ओजसा२३४५ ॥ २३ ॥

मधुच्छन्दा ऋषिः†। हे "सोम!" "इन्द्राय" "पातवे"‡ पातुं "सुतः" अभिषुतस्त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया"¶ अतिशयेन मादयित्र्या "धारया§" "पवस्व" क्षर ॥ २ ॥ २

* उ० २,१,१०,१ = ऋ० ७,२,२,५ = ऊ० १,१,१९; —४,१,१—२—३;—४,२,१;—७,१,१—२;—११,२,१४—१५;—१८,१,१८—१९;—२०,१,१;—२२,२,९—१०।

† "वैश्वामित्रः"-इति ऋषि-नैगेयः।

‡ तुमर्थे तवेङ् प्रत्ययः (३,४,९)।

¶ "तुश्छन्दसि (५, ३, ५९)"-इतीष्ठन्।

§ इवरूपत्वात्।

४ ५ ३ ५ १ ३ ५
(सोमसाम॥) वृषाद्दाउ। पार२३४वा। स्वाधारा२३४या।
३ ५ ३ ५ २ ३ ५ १ २र
मार२३४त्व। त्वा२३४ताइ। चामत्मार२३४राः। वाइस्वाद
१ १ ३ ५र १ ३ ५
धार२३। नार२ओ२३४औहोवा। जा२३४सा॥ २४॥

४५र ४ ५र ५ १ २
(आष्टुभार्गवम्॥) वृषापव। स्वधारा६या। मारुत्वता
१ ३ ५ १ २ ३२
३इ। चामार२त्सार२३४राः। विश्वादा१धा२। नओ३।
१ ५ ५
जा२३४सो६हाइ॥ २५॥

४ ५४ २१ ३२ २
(वैश्वदेवम्॥) आइवृषा। पवा। इहा। औ३हो।
१र ५ २ १ २ २ १
स्वधारा२३४या। म। रु। त्वते३हाइ। च। मा।
१ २ ५र र र र २र
त्सरा२३हा३४इ। विश्वाद्धाहाउ। नओजसाहाउ।
२ २ १र र ५र १ ११
वा ३४ ३ ओ ३४५ वा ६५६। अस्मेरायार्२उतश्रवा२३
१ १
४५ः॥ २६॥

५र ३२ ४ ५ २ १ ३२
(वैश्वदेवम्॥) वृषा। पवा३। एहिया। स्वधार। रया३४
३र ४र ५ १ २ ३र ४र ५ १र २ २ १
औहोवा। मारु३४। औहोवा। त्वतेचमा१त्सा३राः।

औ३हो३१ये३। औहो२३४५वाई५६। विश्वादधान ओजसा२३४५ ॥ २७ ॥

(इन्द्रसाम ॥) वृषापावा२३। हौहोइ। औ३हो२३४५। स्वधारायार३। हौहोइ। औ३हो२३४५। मरुत्वाते२३। हौहोइ। औ३हो२३४५। चमात्सारा२३ः। हौहोइ। औ३हो२३४५। विश्वादाधा२३। हौहोइ। औ३हो२३४५। नओजासा२३। हौहोइ। औ३हो२३४३। ओ२३४५इ। डा ॥ २८ ॥

(इन्द्रसाम ॥) वृषापावा। औहौहो२३४वा। स्वधाराया। औहौहो२३४वा। मरुत्वाता। औहौहो२३४वा। चमात्सारा। औहौहो२३४वा। विश्वादाधा। औहौहो २३४वा। नओजासा। औहौहो२३४वा। हो५इ। डा ॥ २९ ॥

(यौक्ताश्वम् ॥) औहौहोहाइ। वृषा। पवस्वा३धा-

२ १ ३ ५ १ ७ १
रायाइ । मार्ह्र२त्वार२३४ताइ । आइ । चमार३ । चमार
३ ५ र ४ ५ ४ ५ १ ३ ५
त्मा२३४राः । औहोहाहाइ । विश्वा । दधा२ना२३४ओ ।
२ ३ ५र र २ ३ २
जासा२३४औहोवा । ओइ । ज्वरआ ॥ ३० ॥

५ र र ४ ५ २ १ २
(यौक्तोत्तरम् ॥) वृषाऔहोहोहाइ । पवा३स्वाधा
२ १ ३ ५ ३ २ १
१राया३ । मार्ह्र२त्वार२३४ताइ । चमा३इ । ओइ ।
७ ३ ५ र र ४ ५ १ ३
चमा२त्मा२२३४राः । विश्वाऔहोहोहाइ । दधा२ना-
५ १ ३ ५र र २ ३
२३४ओ । जा२सा२३४औहोवा । ओइ । जू२३४-
५
वा ॥ ३१ ॥ ३

॥ इति ग्रामे गेये द्वादशः प्रपाठकः ॥

भृगुर्वारुणिऋषिः* । हे "सोम !" त्वं "वृषा" स्तोतृणामभिमतस्य वर्षकः† सन् "धारया" त्वदीयया "पवस्व" द्रोणकलश‡ मागच्छ । [पवतिर्गतिकर्मा¶ । आगतस्त्वं यदास्माभि-

---

* अथवा जमदग्निः भारद्वाजः (अनु० ) ।

† वृषन्निति नाम्नस्य रूपमिदम् । प्रथमे खण्डे २९९, ३०१, ३१९, ५०१, ५४५, ७८०, ८३४ पृष्ठासु च व्याख्यातम् ।

‡ सोमस्याधारपात्रविशेषम् । अत्रैव चोत्तरत्र ६,१,२,७ — ४,१०—५,९ ऋचु-विदितम् ।

¶ निघण्टौ गतिकर्मसु "पवते"-इत्यस्याष्टोत्तरशततमत्वेन दर्शनात् (२,१४) ।

अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
यस्तेमदोवरेण्यस्तेनापवस्वान्धसा।
३ १ २ ३ २
देवावीरघशꣳसहा ॥ ४ ॥ ४ *

४ ५ १ २ ३ ५
ओम् ॥ (भासम् ॥) यास्ताइ। मादो। वारोओ२३४वा।
३ ५ ४ ५ १ ऽ २ ३ ५ ३
णो२३४याः। ताइना। पावा। स्वाइआओ२३४वा। धा-

रिन्द्राय दीयते तदा] "मरुत्वते" सहाया मरुतो यस्य सन्ति† तस्मै इन्द्राय "मत्सरः"‡ मदकरस्त्व भव। कोदृशः? "विश्वा"¶ विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति समन्वयः ॥ ३ ॥ ३

---

* उ०२,१,१५,१= ऋ०७,१,२१,४ = ऊ०२,१,५;—४,१,१०;—६,२,७;— ९,३,८;—११,२,९—१७—२०;—१२,२,९;—१३,२,१७;—१४,२,११—१२—१३; २०,१,२—३—४ = ऊह्ये १,२,१;—२,१,४—१४—१७।

† अस्ति मरुत ऋत्विङ्नामसु (३,१८)—रूपनामसु (३,१७)—हिरण्यनामसु च (१,२) निघण्टौ। तत्रैव दैवतकाण्डेऽन्तरिक्षदेवतासु च "मरुतः"-इति दृश्यते। अत्र च तेषामेव देवगणानां ग्रहणम्; तथा च श्रूयते—"अस्ति सोमो"-इत्यादि (प्र०२९२पृ०) मरुतामिन्द्रसहायभूतत्वञ्च "इन्द्रस्य त्वा"-इत्यादौ (प्र०६५६पृ०) श्रूयतएव।

‡ मदिधातोरौणादिके सरप्रत्यये रूपम्। अत्र चोत्तरत्रान्यत्रापि चतुर्षु (६,१,१,३—३,८—११—४,१०) श्रोष्यन्ते मत्सर इति।

¶ सुप आले रूपम् (७,१,३९)।

२३४सा । दाइवा । वाइरा । घाशाश्री२३४वा । सार-
३४हा ॥ १ ॥

(सोमसाम ॥) यस्तेमदाः । वराइणियो । ताइनापावा-
३स्वा३ । अन्धसा । दाइवावाइरा३४ । हाउ । घशा
पुऽसहा । हो५इ । डा ॥ २ ॥

(प्राजापत्यम् ॥) यस्ता३२इमा२३४दाः । वराइणायो ।
आ२३४वा । हा । औ२३४वा । हाइ । ताइनापव ।
स्वआन्धासा । औ२३४वा । हा । औ२३४वा । हाइ ।
दाइवावाइरा । औ२३४वा । हा । औ२३४वा । हा३इ ।
घा२शा२३४औहोवा । सहोरयीइ३ष्टा२३४५ः ॥ ३ ॥

(सोमसाम ॥) यस्ताइमा२३दोवरेणियाः । ताइनापव ।
स्वआन्धा१सा२ । दाइवा२वाइरा२३ । घशो२३४वा । सा५
होईहाइ ॥ ४ ॥

अथ पञ्चमी ।

३ २उ ३ १ २ ३ १ ० ३ १ २
तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः ।

५ र २ ४ ५ ४ ५ १ २
(भासऽसाम ॥) यस्ते । माइदा । वा । इया । राइणा
१ र २ ६ २र २र २ १
१या२ः । ताइनापव । स्व । औ३हो । वाहा । धसा२ ।
१ १ ३ ५र र २ ३ २
दाइवा२३ । वा२इरा२३४ औहोवा । घशऽसाहा१ ॥ ५ ॥

५ र र ५ २र २र
(अद्वर्दंडऽसोमसाम ॥) यस्तेमदोवरेणियाइए । तेना-
र २र१र र २ १ २ १
पवस्वान्धसा । देवावोरा२३ । हाइ । घाशाउवा । सा-
२ २ ५
हाउवा३ । ऊ३२३४पा ॥ ६ ॥ ४

अमहोयुर्ऋषिः* । हे "सोम !" "ते" तव "देवावोः"†
देवकामः "अघशंसहा" राक्षसानां हन्ता‡ "वरेण्यः" सर्वैर्वर-
णीयः "मदः" मदकरः "यः" रसोविद्यते तेन रसेन "अन्धसा"
आदरणीयेन¶ "पवस्व" क्षर ॥ ४ ॥ ४

---

* "आङ्गिरसः"-इति ऋषि-नैगेयः ।

† देवावीरिति 'वीकान्तौ (अदा०उ०)'-इत्यस्य रूपम्, कान्तिरिहेच्छा । देवान् वेति इच्छे स देवावीः, अन्येषामपीति (६, १, १३७) पूर्वपददीर्घः ।

‡ "अघशंसः"-इति स्तेननामसु त्रयोदशं नैघण्टुकम् (३, २४) । 'अघं पापं, यः शंसति, तस्य हन्ता'—इति वि० ।

¶ आदरणीयेनान्नेनेति भावः । "अन्धसा अन्नेन"-इत्येव वि० ।

१ २　३ १　२
हरिरितिकनिक्रदत् ॥ ५ ॥ ५ *

५ र र　　१　　२
(वैष्टम्भे द्वे ॥) तिस्रोवाचाः । उदाइ । उदा३१उ ।
२　　५　र र　　२ २　　२
वाये३ । रा२३४ते । गावोमिमा । तिधाइ । तिधा३१उ ।
२　　५　　र　　२ १　　२
वाये३ । ना२३४वाः । हरिरिती । कनाइ । कना३१उ ।
२　　५
वाये३ । का२३४दात् ॥ ७ ॥

५ र र　　१　२ २　　१र र　　२
तिस्रोवाचाः । उइाइरा३ते । गावोमिमान्तिधा१इ-
२　२　　र ३　　५　　१ ३　　५र र
ना३वाः । हरिरितो२३४हाइ । का२ना२३४औहोवा ।
३　५
क्रा२३४दात् ॥ ८ ॥

२ र १　　५　२ र १　　२र
(पाष्ठौहे द्वे ॥) तिस्रोवाचो२३४हाइ । उदीरताइ । गा-
र १　　५　२ र १　　२　१　　५　　२
वोमिमा२३४हा तिधिनवाः । हरिराइतो२३४हाइ । क-
१ २　　१ ३　　५र र　　२ १ २ र　१ २ १ १
नाये३ । क्रा२दा२३४औहोवा । अस्मभ्यक्रातुवित्तमा२-
१ १ १
३४५म् ॥ ९ ॥

---

* उ० २,२,१४,१ = ऋ० ६,८,२३,४ = ज० २,१,२० ;—७,१,१६ ;— ९,१,७ ; —१५,१,१९ ;—२०,१,१०—११ ; —ऊह्य २,२,१३ ।

५ ४र र ५ ४५र ४ ५ २र र
तिस्रोवाचउदीरतो। वाहाइ। गावोमिमाइ।
१ २ ३ ५ ४ ५ ४ ५ १ ३ ५र र
तीर्धेनार२३४वाः। हारीराइती। कार२नार२३४ओहोवा।
२ ५
क्रा२३४दात् ॥ १० ॥

४ ३ र ४ २ ३र ५
( क्षुल्लकवैष्टम्भम् ॥ ) तिस्रोऽ५वा। चा३उदीरताइ।
१ र २ १ २ १ २ २ १ २
गावोमिम। तिधाइना१वा२३ः। होवा३हाइ। हराइरा१-
१ २ २ १ २ १ ३ ५र र
इतीर३। होवा३हाइ। कनाये३। क्रा२दार२३४औहोवा।
२ ५
दीर३४श्राः ॥ ११ ॥

४ र र र ४ २र१र
( पाष्ठौहम् ॥ ) तिस्रोवाचा५उदीरताइ। गावोमिम-
२१र २ १ ५ २
न्तिधेनवः। हरिरार३इती। कनी२। ऊवाइ। होइवा३।
१ ३ ५र र २र १ २ १ २ १ १ १ १
क्रा२दीर३४ओ होवा। हाओवा। ओव२३४५ ॥ १२ ॥ १

त्रितऋषिः*। "तिस्रोवाचः" ऋगादिभेदेन त्रिविधाः†

*—"आप्त्यः"—इति ऋषि-निर्णयः।

†—"चत्वारिवाक्परिमिता"-इत्यादौ ( ऋ० १, २२, ८, ४५ ) श्रुतौ तु व्यावहारिक्या वाचा वाचां चतुष्ट्वम्। तथाच तत्रैव यास्ककृतं व्याख्यानम्—"ओङ्कारो-महाव्याहृतयश्चेत्यार्षम् ; नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः ; मन्त्रः कल्पो ब्राह्मणं,चतुर्थी व्यावहारिकीति याज्ञिकाः ; ऋचो यजूंषि सामानि,चतुर्थी व्यावहारि

अथ षष्ठी ।

१ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः।
३ २ ३ १ २ ३ १ २
अर्कस्ययोनिमासदम् ॥ ६ ॥ ६ *

५ र र २ १ २ १
(इषोवृधीयम् ॥) इन्द्रायेन्दाउ। मरुत्वताइ पवस्वा-

"उदीरते" स्तोतः प्रोद्गायन्ति ऋत्विजः। "धेनवः" आशिरेण प्रीणयित्राः "गावः" "मिमन्ति"† शब्दायन्ति दोहार्थम्। "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्"‡ शब्दं कुर्वन्ति गच्छति कलशम्¶ ॥ ५ ॥ ५

---

* उ० ४,१,११,१= ऋ० ७,१,४०,१=ज० ३,१,१६—१७—१८—१९—२०—२१; —८,१,४;—१०,२,४;—१६,१,१३;—२२,२,१६ कल्पे १.१,१०।
कीति नैरुक्ताः; सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारिकीत्येके। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादः। अथापि ब्राह्मणं भवति—सा वै वाक् सृष्टा च तुर्द्धा व्यभवदेष्वेव लोकेषु त्रीणि, पशुषु तुरीयम्; या पृथिव्यां साग्नौ सा रथन्तरे, यान्तरिक्षे सा वायौ सा वामदेव्ये, या दिवि सादित्ये सा बृहति सा स्तनयित्नौ; अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति—या च देवानां, या च मनुष्याणाम्"-इति नि० पू०१,९।

†—'मा शब्दे (जु० आ०)'-इत्यस्य पुरुषव्यत्ययेन (३,१,८५) रूपम्।

‡—निरन्तरशब्दकरणेऽर्थे विद्यमानस्य चुरादेरुभयपदिनः क्रन्देः सार्वकालिके (३,४,६) लुङि "दाधर्ति (७,४,६५)"-इत्यादिना चङ्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपातितः।

¶—द्रोणमिति प्रसिद्धम्।

मा२। धुमत्तमाः। अर्कस्ययो२। निमा२३। सा२-
दा२३४ औहोवा। इषीवृधे१॥ १३॥

(इन्द्रसाम॥) आ२३४इन्द्रा। या२३४इन्द्रा। मरु-
त्वते३। पा२३४वा। स्वा२३४मा। धुमात्तमा३ः। आ-
२३४र्का। स्या२३४यो। निमासदा२३४५म्॥ १४॥

(वैश्वदेवि द्वं॥) इन्द्रायाइन्दो२३। हा। औ३होवा।
मरुत्वाते२३। हा औ३होवा। पवस्वामा२३। हा।
आ३होवा। धुमत्तामा२३ः। हा। औ३ होवा। अर्क-
स्येयो२३। हा। औ३होवा। निमासादा२३म्। हा।
औ३होवा३४३। ओ२३४५इ। डा॥ १५॥

इन्द्रायेन्दो। ए५। मरु। त्वताइ। पवस्वमधु-
मत्ता२३माः। ऊवाइ। हो३वा। अर्कास्या२३यो। ऊ-
वाइ। हो३वा। निमासा२३दा२४३म्। ओ२३४५इ। डा।
॥ १६॥

५ र र र २ १ २ १
(आग्नेये द्वे ॥) इन्द्रायेन्दोहाउ। म। रु। त्वते२हाउ।
१ २ १ ७ २ १ ७ २
पवस्वमधु। मा। तमा२३हाउ। अर्का। स्ययो२३हा३इ।
१ ५ ४ ५
निमा२३। हो२३४वा। सा५दो६हाइ॥ १७॥

५ र र ४ ५ ४ ५ २ १ २ १ २
इन्द्रायेन्दोवा। ओवा। मरुत्वतोवा। ओवा।
१ २ १ २ १ २ २ ४ ५
पवस्वमोवा। आवा। धुमत्तमोवा। ओवा३। अर्काहाउ।
४ ५ २ १ २ १ ५ ४ ५
स्ययोहाउ। निमोवा३ओ२३४वा। सा५दो६हाइ॥ १८॥

४ ५ र र र ४ ५ र ४ १
(वैश्वदेवम् ॥) इन्द्रायेन्दोमरुत्वाते। ओहाइ पव-
२ १ २ ६ २ २ ५ १ ७
स्वमधमत्तमः। ओ३हा३४३। ओ३४हा। आर्कस्यायो२३।
१ २ ३ ५ र र २ ३ ५
नार२इमा२३४ओहोवा। उप्। सा२३४दाम्॥ १९॥

५ र र र ५ १ २
(आग्नेयम् ॥) इन्द्रायेन्दोमरुत्वा६ताइ। पवस्वम।
१ २ ५ र ५ ४ ५
धुमात्ता१मा२३४ः। अर्कस्ययोनिमा६हाउ। सा५दो६हाइ
॥ २०॥ ६

काश्यप ऋषिः*। हे "इन्दो" सोम!† "मधुमत्तमः"

* "मारीचः" इति ऋषि-नैर्णयः।

† ऋ० ९६४ पृ० ३,०।

अथ सप्तमी।

१ २ ३ १र २र ३ १र २र ३ २
असाव्य॒ꣳशु॒र्मदायाप्सु॒दक्षोगिरिष्ठाः।
३ २उ ३ १ २
श्येनोनयोनिमासदत्॥ ७॥ ७*

४ ५ १ २
(श्येनवानि चत्वारि॥) आसा। वियꣳशुर्माइ१उवा२३।
५ ४ ५ ४ ५ २ २ १ १ १ १
दा२३४या। आप्सुदाक्षाः। गिरा३१उवायि३। ष्ठा२३४५ः।
२र १र २ ५
श्येनोना२३यो। निमा३१उवा२३। सा२३४दात्॥ २१॥
४ ५र ४ १ ० १ ० १
असाविया। शुर्मदा२। य। आप्सुदाक्षा२ः। गा-
२र १ २ १ २ ५ ४
इरिष्ठाः। श्याइनो१नायो२३। निमो२३४वा। साप्तदो-
५
६हाइ॥ २२॥

अतिशयेन मधुमान् "अर्कस्य" अर्चनीयस्य† यज्ञस्य "योनिं" स्थानं 'आसदम्'‡ उपविष्टुं "मरुत्वते" "इन्द्राय" इन्द्रार्थं "पवस्व" क्षर॥ ६॥ ६

---

* उ० ३,२,१६,१=ऋ० ७.१,२४,४,= आर १,१,२३= ऊ ३,१,१०;—७,२,१८;—१६,१,४;—२०,२,२।

† प्र० ८८८ पृ० ६०। अर्कइति अर्चते रूपम्।

‡ 'आसदम् आसीद' इति वि०।

५ र　३ २ ३　५　१ ७　१　३　१
असा । वियाओ२३४वा । शूमंदायो । ओ२३४वा । आ-
२ ३　५　२ १र　२ ३　५　२र१र र
प्साओ२३४वा । दक्षोगिराइ । ष्ठाओ२३४वा । श्येनोनयो-
र २ ३ १ १ १ १
निमासदा२३४५त ॥ २३ ॥

५ र　३ २ ३　५　२ १　२　३　५
असा । वियौवाओ२३४वा । शुमंदायौ । वाओ२३४वा ।
३ २ ३　५　१　२ ३　५
अप्सु । दक्षौवाओ२३४वा । गिराइ । ष्ठौवाउ२३४वा ।
र　३ २ ३　५　१　२ ३　५
श्येनः । नयौवाओ२३४वा । निमा । सादौवाओ२३४वा ।
४
हो५इ । डा ॥ २४ ॥

४ ५र　४　५　२
( च्यावनानि चत्वारि ॥ ) असा । व्युऊवाहाइ । अंशुः-
१ रर　र　र　१　२
शुर्मदायाप्स्वदक्षोगिरिष्टाउऊवा२३होइ । श्या२३इनो३ ।
१ ३　५र र　२ २र२ २ १ १ १ १
ना२योर३४औहोवा । निमासदा२३४५त ॥ २५ ॥

४ ५र　४　५र ४　५　१　२　१
असाव्यंशुः । औहोवाहाइ । मदा२३या । आ-
१ र　२　१　२ २　१ ३　५र र
प्स्वदक्षोगिरिष्ठाः । श्याइनोना३यो३ । ना२इमा२३४औहो-
२　३　५
वा । उप । सा२३४दात् ॥ २६ ॥

अथाष्टमी।

२ ३ १२ ३१२ ३१२
पवस्वदत्तसाधनोदेवेभ्यःपीतयेहरे।

३२ २ ५२ ४ ५२ ४
इहा३१२३४। इहा। साव्य॑श्शुर्मदाय। इहा।
२ १ २ २ ३ ५ २२ १२ ३२
अप्स्वदक्षोगिरिष्ठा३४५ः। ई२३४हा। श्येनोनयोर२निमा-
२ ५ १ ३२ ३ ५
३४५। ई२३४हा। आ२सदा३४५त्। ई२३४हा॥ २७॥

२ ५ २ ५ ५
असा२३४। वियश्शुः। मदा२३४याई। हाउ।
२ २ ५ २१ ५ १ २
आप्सुदा२३४क्षाः। गिराइष्ठा२३४हाइ। श्याइनोना३-
२ १ २ १ ५ ५
यो३। नाइमा२३हा३४३इ। सा२३४दो६हाइ॥ २८॥ ७

जमदग्निर्ऋषिः*। "गिरिष्ठाः" पर्वते जातः "अंशुः" सोमः "मदाय" मदार्थं "असावि" अभिषुतः। "अप्सु" सतीवरीषु "दक्षः"† प्रवृद्धस्य भवति। किञ्च। "श्येनोन" यथा श्येनो वनादागत्य स्थानमासीदति तद्वद् "अयं" सोमः "योनिं" स्वकीयस्थानम्‡ "आ सदत्"¶ आसीदति॥ ७॥ ७

---

* "भार्गवः"-इति ऋषि-नैगेयः।

† दक्षइति बलनामसु नैघण्टुकम् २, ९। 'दक्षः शीघ्रः'-इति वि०।

‡ द्रोणकलशमिति यावत्।

¶ लेटो रूपम् (३, ४, ७)

२ १ २ ३ २ ३ १ २
मरुद्भ्योवायवेमदः ॥ ८ ॥ ८ *

४ ५ २ ४२ ५ १
( प्राजापत्ये द्वे ॥ ) पवस्वदौ। हौहोवाहाइ। चा-
२२ ऽ २ २ २ ५२
साधनाः। औ३हो३४इ। औ३हो३४इ। औहो।
३२ २ २ १२ २ १ २ ३२ २ ऽ २ २
वाहाइ। देवेभ्यःपाइ। तयेहराइइ। औ३हो३४इ।
२ ५२ ३२ २ १ २२ ऽ २ २ २ ५२
औहो। वाहाइ। मरुद्भ्योवा३। औ३हो३४इ। औहो।
३२ २ १ ३ ५ ८ २ ३ ५
वाहाइइ। यांरवार३४औहोवा। मा२३४दाः ॥ ८९ ॥

४ ५ ४२ ५ ५ २२ १२ २ १
पवस्वदक्षसाधनः। ओ६वा। देवेभ्यःपीतया२ओइ।
२ १ २२ १ ४ ५ ४
हरा२इ। मरुद्भ्योवा२। ओ२३। यवोवा। मा५हो६
५
वाइ ॥ ३० ॥ ८

दृढ़च्युत आगस्त्य ऋषिः। हे "हरे" हरितवर्ण पाप-हर्त्तर्वा सोम! "दक्षसाधनः" दक्षोबलन्तस्य साधकः † "मदः" मदकरश्च‡ त्वं "पवस्व" क्षर। किमर्थम् देवेभ्यः इन्द्रादिभ्यः

---

* उ०२,१,१०,१= ऋ० ६,८,१५,१= उ० १,२,८;—१५,२,९;—१६,२,१=ऊह्य १.१,९।

† 'दक्षसाधनः शीघ्रसाधनः'-इति वि०।

‡ 'मदः मदनीयः'-इति वि०।

१२ २र २ १ १ २१ ५
मदा२इषुसा। हाहाइ। ओवा२३हो। वंधा२३४वा।

४ ५
आ५सो६हाइ ॥ ३५ ॥

५र र र र ४ ५ १ २
पर्यौंहोवाहाइस्वानाः। गा२इ। रिष्ठा२ स्था। ओ२३४।

३र २ ३र २ १ २ १ २ १ २ १ ०
होहोइ। हाहा। होवा। होवा। पवित्रेसो। मात्र

२ ३र २ ३र २ १ २ १
हारा२त। ओ२३४। हाहोइ। हाहा। होवा। मदा

२ २ २ ३र २ ३र २ १ २ १
२इषुसा। ओ२३४। हाहाइ। हाहा। होवा। हो

२ २१ ५ ४ ५
वा३। वंधा२३४वा। आ५सो६हाइ ॥ ३६ ॥ ९

अस्याः परस्याश्च कश्यपोऽसित* ऋषिः। अयं "सोमः" "पवित्रे"† "पर्य्यक्षरत्" परिक्षरति। "स्वानः" सुवानः‡ अभिषूयमाणः "गिरिष्ठाः" गिरिस्थायी गिरौ वर्त्तमान इत्यर्थः। स त्वं "मदेषु" मादकेषु स्तोत्रकेषु "सर्वधा असि" सर्वस्य धाता दाता वा भवसि॥

"स्वानः"-"सुवानः"-इति, "अक्षरन्"-"अचा"-इति च साम्नक्चः पाठः ॥ ८ ॥ ९

---

* अथवा कश्यपो देवलः ( ऋ० अनु० )।

† 'पवित्रे ऊर्णमये'-इति वि०। पवित्रञ्च दशापवित्रमित्यनुपदम् ( इतश्चतुर्थे ) वक्ष्यति सायणः।

‡ साम्प्रसिकबहुलवचनात् उवङ् विकल्पः ( ७, ३, ९१ )।

अथ दशमी।

१ २ ३२ ३ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयांसिनप्त्योर्हितः।

३ १२ ३ १ २
स्वानैर्यातिकविक्रतुः॥ १०॥१०†

॥ चतुर्थ-दशति॥

५ र ४ ५ १ र
(पूर्व्वमौर्णायवम्॥) परिप्रियादिवःकावीः। वयां

र र र २ १ १ ऽ
सिनप्तोर्हितः। स्वानैर्या२३ती। आया२। इया२ई-

२ ३ २१ ३ ५र र ३ ११११
३या। कविक्रतोर्र। या२३४औहोवा। ई२३४५॥ ३७॥

४ ४ १ऽर
(उत्तरमौर्णायवम्॥) परिप्रिया५दिवःकवाइः। वया

र २१ र र २१ र र २ १
२हो१वांसिनप्त्रो वोर्हितः। स्वानैर्या२३ती। ऊवा।

२ १ २ १ ऽ २ ३ २ २
होवा। होवा। ऊवा२इ। ई३या। कविक्रतोर।

३ ५र र २ ११११
या२३४औहोवा। ई३या२३४५म्॥ ३८॥ १०

॥ इति त्रयोदशस्यार्द्धः प्रपाठकः॥

---

* "सुवानोयाति"-इति उ०-व्याख्याने वि०।

† उ० ३,१,१९,१ = ऋ० ९,७,३३,१ = ज० १,२,१५,—७,९,८;—१५,२,१०;—१६ ..,११;—२०,१,१७=जह्ने ४,१,६।

अथ द्वितीये खण्डे—

सैषा प्रथमा।

१ र २र　　३ १ ३ १ २　　३ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम्*।
३ २　३ १ २
सुताविदथेअक्रमुः॥ १ ॥११ †

२ ३　५　२ १ २
ओं॥ ( सौभरे द्वे ॥ ) प्रसोमार२३४साः। मदच्युतः।

कविर्मेधावी। "कविक्रतुः" अन्तःप्रज्ञः क्रान्तकर्मा वा सोमः "नप्त्योः" अधिषवणफलकयोः ‡ "हितः" निहितः। "दिवः" द्युलोकस्य "प्रिया" प्रियाणि "वयांसि" वयन्ति गच्छन्तीति वयांसि ग्रावाणः ¶ तानि। [तथाच मन्त्रवर्णः—"श्येना अतिथयः पर्वतानां ककुभः"-इति।] "स्वानैः" अभिषुणवद्भिरध्वर्य्यकानि "परियाति" गच्छति॥

"स्वानैः"-सुवानैः-इति साम्नकृचः पाठः॥ १० ॥ १०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य प्रथमः खण्डः॥ १ ॥

---

* "मघोनः"-इति ऋ०, उ०-व्या० वि० च।

† उ० १,२,२१,१=ऋ०६,८,२२,१=क० १,२,१४ ;—२१,१,२०।

‡ 'द्यावापृथिव्योः अहोरात्रयोर्वा'-इति वि०।

¶ 'वयांसि अन्नानि पक्षिणो वा'-इति वि०। ग्रावाणश्च सोमाभिषवार्थानि पात्रविशेषाणि "अग्निरुक्थे"-इति ऋचो व्याख्यानं द्रष्टव्यम् (प्र० १७२ पृ०)। निघण्टौ तु ग्रावइति पर्वतइति च मेघनामसु पठ्यते १, १०।

अथ द्वितीया।

१ २ ३२ ३ २ ३ १ २ ३ १ २
प्रसोमासोविपश्चितोपोनयन्तऊर्मयः*।

१ २ ३ १ २
वनानिमहिषाइव ॥ २ ॥ १२ †

१ २ २ १ ३ ५ १ ७
औ२३होवा३। अवा२सा२३४इना:। ओइमघोना२म्।

१ १ ३ ५२ २ २२ ३ १ १ १ १
सुता२३:। वा२इदा२३४औहोवा। थेअक्रमू२३४५:॥१॥११

५२ २ १ २ १ २ १
प्रसोमासा:। वाइपश्चितः। आपो१नाया२। ता

श्यावाश्वऋषिः‡। "सोमासः"¶ सोमाः "मदच्युतः" मदस्राविणः "सुता" सुतः§ अभिषुतः सन्तः "मघोनां" हविष्मतां॥ "नः" अस्माकं सम्बन्धिनि "विदथे" यज्ञे "श्रवसे" ** अन्नाय कीर्त्तये वा "प्राक्रमुः" प्रगच्छन्ति॥

"मघानां"—"मघोनः"-इति पाठौ॥ १ ॥ ११

---

* "अपांनयन्त्यूर्मयः"-इति ऋ० ख, उ०-व्या० वि० च।

† उ० १,२,१९,१= ऋ० ६,८,२३,१= ज० ६,२,१२;— ११,२,११;—१४,१,१२—१३—१४;—१८,१,११;—१९,२,१५—१६।

‡ "आत्रेयः"-इति ऋषि-नैगेयः।

¶ असुकि रूपम् (७, १, ५०)।

§ सुताइति आले रूपम् (७, १, ३९)।

|| मघं धनम्, इह च तत् हवीरूपम् लक्ष्यमिति भावः।

** "विदथः"-इति यज्ञ-नामसु पञ्चमं नैघण्टुकम्।

अथ तृतीया।

१२ ३ १२ ३२ ३१ २ ३ ३ १ २

पवस्वेन्दोवृषासुतःकृधीनोयशसोजने।

३ २३ १ १

विश्वाअपद्विषोजहि ॥ ३ ॥ १३ *

१ र२ १ २ १ २ २ १ २र

ऊर्मयः। वाना१निमा२। आऔ३हो। हिषाइव।

१ २ २

इडार३भा३४३। ओ२३४५इ ॥ २ ॥ १२

त्रितऋषिः†। "विपश्चितः" मेधाविनः "सोमासः" सोमाः "प्र नयन्त" पात्राणि प्रति गच्छन्ति। किमिव? "अपऊर्मयः" [अपइति षष्ठी व्ययेन द्वितीया ‡]। [अपामूर्मयः अतएव बहृचाः—अपान्नयन्तीति पठन्ति] ते यथा सततमुद्गवन्ति तद्वत्। [बाहुल्येऽयं दृष्टान्तः। अर्थतो गमने दृष्टान्तान्तरमभिधीयते- "वनानि महिषाः" प्रवृद्धा मृगा इव। अथवा स्वाश्रयात् प्रद्रवणे प्रथमो दृष्टान्तः। द्वितीयस्तु दवापविचारादधःप्रदेशे ॥ २ ॥ १२

---

* उ० २,१,२,१= ऋ० ७,१, २२, २।

† "आप्त्यः"-इति ऋषि-नैगेयः।

‡ "व्यत्ययो बहुलम्"-( नै० ३, ३, ८ ) व्याख्यातश्चैवं पुरस्तात् ( प्र०२,१५पृ०—) मृगेषु यो महान् मृगः तस्य तु नामौ महिष इति प्रसिद्धम्। तथाहि—

"ब्रह्मा देवानाम्पदवीः कवीनामृषिर्विप्राणां महिषोमृगाणाम्"

—इति ऋग्वेदीया श्रुतिः (९, ५, ११, ६)। "महिषो मृगाणामित्येषन् हि महा भवति मृगाणाम्"-इत्यादि तद्व्याख्यानं यास्कस्य।

अथ चतुर्थी।

२३ १ २ २ १ २ ३ १ २
वृषाह्यसिभानुनाद्यमन्तन्त्वाहवामहे।
१ २१ ३१२
पवमानस्वर्द्दृशम्*॥ ४॥ १४†

४ २ २ ४ २१२
(वृषकाणि त्रीणि॥) पवस्वेदो५वृषासुताः। कृधी
२ २ २ २ ३ ५ १ २
नोयशसोजनाये३। वाइस्वाआ२३४पा। द्वार्इषा२३४
५२२ ३ ५
औहोवा। जा२३४हो॥ ३॥ १३

४५२ ४ २१२ २ १ २ २
वृषाह्यिया। सिभानू२३ना। द्युमन्तंत्वाहावा१माहा
३१ १ २१ ५ ३ ५
२३४इ। पवा३। मानस्वुवे२३४वा। हू२३४शाम्॥ ४॥

अमहीयुर्ऋषिः‡। हे "इन्दो" सोम! "सुतः" अभिषुतः "वृषा" सेक्ता त्वं "पवस्व" धारया क्षर। "जने" जनपदेषु "नः" अस्मान् "यशसः" यशस्विनः "कृधि"¶ कुरु। "विश्वा" सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अप जहि" मारय॥ ३॥ १३

---

* "पवमानस्वाध्यः"-इति ऋ०।

† उ० २,१,४,१= ऋ० ७,१,१,४।

‡ "आङ्गिरसः"-इति ऋषि-निर्णयः।

¶ 'श्रुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)"-इति सिद्धं कृधीति। क्वचित्तु "कृधी"-इति दीर्घान्तपाठः, स च "द्व्यचः (६, ३, १३५)"-इति योगविभागात् साध्यः।

अथ पञ्चमी।

१२ ३१२ ३१ २३ २३ २
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिः *।

४ २ २ ४ २ १ २२ १ ५२ २
वृषाह्यियापुसिभानुना। द्युमन्तंत्वाहवा२महे।

५ २ १ २२ १ २
हा२इ। ऊ२। हो३वा। पवमानस्वर्दृशम्। हा-

५ २ ३ २
२इ ऊ२। हो३वा। ऊवो३४५इ। डा॥ ५ ॥ १४

भृगुर्ऋषिः †॥ हे "सोम!" त्वं "वृषा" अभिलषितफलानां वर्षिता "असि हि" भवसि खलु। तस्मात् हे "पवमान" पूयमान पुनान ‡ वा सोम! "स्वर्दृशं" सर्वस्य द्रष्टारं ¶ "भानुना" तेजसा § "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्तं वा "त्वा" त्वां "हवामहे" ॥ यज्ञेषु आह्वयामहे ॥ ४ ॥ १४

---

* "मती"-इति ऋ०।

† "वारुणिः भार्गवोजमदग्निर्वा"-इति ऋषि-नैगेयः।

‡ अभिषुत शोधित इत्यर्थः।

¶ प्र०४८० पृ० द्र०।

§ भानुरिति निघण्टावह्नर्नामसु (१,९) दृश्यते परमिह सर्वत्र रश्मिवाचकत्वेन व्याख्यातमाचार्येण—(प्र०२१९ पृ०, ४५८ पृ०)।

‖ ह्वः सम्प्रसारण-बाहुल्येन रूपमिदम् (६, १, ३४)।

३ १र २र ३ १ २
सृजदश्वꣳरथीरिव ॥५॥ १५ *

२ २ ३र ४ ५ ४ ५
(कौम्भ्यस्य सामानि त्रीणि ॥) इन्दुरौहोवाहाइ। पावी।
२ १ ३ ५ २र १ ६ २ १
ष्ठचा२इ। तनो२३४हा। हाहोइ। हो३हा। प्रियाः-
२र २र २ ३ ५ २र १ ६ २
कवी। नाम्न। तिरो२३४हा। हाहोइ। हो३हा।
१ ३ ५ २र र ६ २ १
सृजार२त्। अश्वो२३४हा। हाहोइ। हो३हा३। रा२
३ ५र र ३ ५
या२३४ औहोवा। ई२३४वा ॥ ६ ॥

४ ५ ४र ५ ४ ५ ४ ६ २ २
इन्दुःपविष्टचेतनःप्रियःकवाइ। ऊ३म् ऊम्। नाम्ना-
५ १ २ ६ २ १ २
२३४तौः। सृजादा२३श्वाम्। ऊ३म् ऊ३म्। रा२था-
५र र ३ ५
२३४औहोवा। ई२३४वा ॥ ७ ॥

४ ५ ४र ५ ४ ५ ४ ४र ५ ४ ५ ४ ४
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिःसृ। जा५दश्वाम्।
१ १ १ ३ ५र र ३
ओवा२३। ओवा२३। रा२ था२३४ अ होवा। ई २ ३ ४
५
वा ॥ ८ ॥ १५

---

* ऋ० ७,१,३७,५।

अथ षष्ठी।

१२ ३२३ १२३१र २र ३२
अद्दश्चतप्रवाजिनोगव्यासोमासोअश्वया।
३१२ ३१र २र
शुक्रासोवीरयाशवः॥ ६॥ १६ *

५ २ ४ ५४र ५ १
(कार्त्तवेशस्य त्रीणि॥) अहृच्चाइताप्रवाजिनाः। गा-
२ र १ २ १
व्या२सोमा२। सोअश्वयाश१क्रा२सोवी२। रया२-
१२ १
शवः। ओ२३४५इ। डा॥ ८॥

५ र ५र २१र र र र
अहृच्चताप्राईवाजिनाः। गव्यासोमासोअश्वया२३-

अस्या उत्तरस्याश्च कश्यपऋषिः†। "चेतनः" प्रज्ञापकः "प्रियः" देवानां प्रीतिकरः "इन्दुः" सोमः "कवीनां" क्रान्तकर्मणां स्तोतृणां‡ "मतिः"¶ मत्या स्तुत्या "पविष्ट"§ पवते। "अश्वं" हयं "रथीरिव" रथीव ऊर्मिं॥ "सृजत्" सृजति॥ ५॥ १५

---

* उ० ४,१,२,१=ऋ० ७,१,२६,४।

† "मारीचः"-इति ऋषि-नैगेयः।

‡ प्र०९२८ पृ० द्र०।

¶ स्वादेशे रूपम् (७,१,३९)।

§ लेटः सिप्पक्षे रूपम् (३, ४, ९४)।

॥ "पङ्क्तीकृतानामश्वानां गमनोद्गमनाकृतिः। अतिवेगसमायुक्ता गतिरूर्मिरुदाहृता"-इत्यश्वचिन्तासमिति।

अथ सप्तमी।

१२ ३ १२ ३ १र २र ३ १ २
पवस्वदेववआयु*षगिन्द्रङ्गच्छतुतेमदः।
३ १र २र ३ १ २
वायुमारोहधर्मणा ॥ ७ ॥ १७ †

१ २ १र र २ २ १ १ २ ५र
हाइ। भुक्कासोवा३१इ। रया२३। श्वा२वा२३४औ-
र २ ५
होवा। ग्वा२३४भी ॥ १० ॥

३ ४ ३ ४र ५ २ ४ ५र २
आहुन्वन्तप्रवाजिनाः। ए३। गव्यासोमा। सो३
१ २ २ १ ३ ५ २ १ ५ ४
आश्वा३या। भुक्का२सो२३४वौ। रयो२३४वा। श्वा५-
५
वोईहाइ ॥ ११ ॥ १६

"वाजिनः" बलवन्तः‡ "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्या" गवेच्छया¶ "अश्वया" अश्वेच्छया§ "वीरया" वीरेच्छया च॥ "प्रासृन्वत" ऋत्विग्भिः प्रकर्षेण सृज्यन्ते॥ ६ ॥ १६

---

* "दे वा यु ०"-इति ऋ०, ऊ०-व्या० वि० च।

† ऊ० ५,१,१५,१ = ऋ० ७,१,३४,२ = ज० ४,२,१७—१८—१९—२० ;—१७,१,१=कल्पे १,२,२।

‡ 'अन्नवन्तः'-इति वि०।

¶ प्र०२२३ पृ० द्र०।

§ ४ प्र० ४११ पृ० द्र०।

॥ अश्वयेतिवत् साध्यः।

अथाष्टमी।

१ २ ३ २ ३ १र २र ३ २
पवमानोअजीजनद्दिवश्चित्रन्नतन्यतुम्।

४ ५ ४ ५ ३२ १ २
(श्राम्मदे द्वे॥) पावस्वदि। वया३। वा२या२३४

५र र ३ ५ ४ ५ ४ ५ ३ २
औहोवा। यू२३४षाक्। आइन्द्रंगच्छा। तुता३इ।

१ २ ५र र ३ ५ २र
तू२ता२३४औहोवा। मा२३४दाः। वायू२१हो१इ।

१ २ ३ २ १ २ ५र र ३
आर३रो। ह्वधा३। ह्वा२धा२३४औहोवा। मा२-

५
३४णा॥ १२॥

३४५र र २ ३ ५ १र १
पवस्वदेवए। होऐहो२३४या। आयुषागै२होए

५ २ १ र १ ५ २ १
२हो३या। इन्द्रंगच्छतुतेमदऐ२होऐ२हो३या। वायुमा-

२ २१ ५ ४ ५
रो३१२३। ह्वधो२३४वा। मापूणोईहाइ॥ १३॥ १७

निध्रुविः काश्यपऋषिः। हे सोम! "देवः" द्योतमानस्त्वं "पवस्व" धारया क्षर। अपिच तव "मदः" मदकारोरसः "आयुषक्" अनुषक्तं* यथा भवति तथा इन्द्रं प्रति गच्छतु। अपिच

* सचते रूपम्। आनुषक् आयुषक् इति शाखाभेदेन पठ्यते "आनुषगिति नामानुपूर्वस्यानुषक्तंभवति"-इति वि०।

१ २ ३२३२
ज्योतिर्वैश्वानरम्बृहत् ॥ ८ ॥ १८*

४५ १र २१२ ५
(जनित्रे द्वे ॥) पावा। मानो। अजीजार२३४नात्।
२१ ०र१ १ २
दिवश्चित्राम्। नतन्यतूम्। ज्योर्तिवैश्वा२३। नार्रा
५र र ३ ५
२३४औहोवा। बृ२३४हात्॥ १४ ॥

५ र १ २ २ १ २१
पवमानाः। अजाइजा२नात्। दिवश्चित्रा२३१
२ १२३ ५ ३ ५ ३
हाइ। नातन्या२३४तूम्। ज्यो२३४ती। वा२३४इ
५ ४ ५ ४ ५
श्वा। नरोवा। बृ५हो६हाइ॥ १५ ॥ १८

त्वं "वायु" "धर्मणा" धारकेण† रसेन‡ "आरोह" प्राप्नुहि॥
"देवआयुषक्"-"देवायुषग्"-इतिपाठौ ॥ ७ ॥ १७

---

* उ० ३,१,२,१ = ऋ० ७,१,२१,१ = ज० १२,१,१२ ;—१८,१,८—९।

† 'धर्मणा कर्मणा'-इति वि०।

‡ धर्मणेति विविधं व्याख्यातम्। तथाहि--"जातः परेण (प्र०२४८ पृ०)"-इत्यत्र 'धर्मणा आधानादि-कर्मणा'-इति, "घृतवती (प्र० ७७७ पृ०)-इत्यत्र 'धर्मणा धारणेन'-इति इह 'धर्मणा धारकेण रसेन'-इति ; एव मुत्तरत्रापि (छ० ६, ६, २,८—उ० २, २, ९, २—३, १, १, ३—२,१, १०, ३—३, २, २०, ३—४, २, २, ७—७, १, ७, ३) अत्रु द्रष्टव्यम्।

अथ नवमो।

१ १ २ २ ३ १ २ ३ १ २ ३ १ २ ३ २
परिस्वानास*इन्दवोमदायबर्हणागिरा।
१ ० ३ १ २
मधोअर्षन्ति† धारया ॥ ८ ॥ १९ ‡

४ ५ २र र र र
(प्रक्रौडम् ॥) पारी। स्वानास। इन्दवोमदायब।
१ २ ३ १ २ २ १ ५ ४
र्हणा२३गिरा३४। मधो३४अर्षा३। तिधो२३४वा। रा
५
प्र्योई्हाइ ॥ १६ ॥

४ ५ २र १र १
(सङ्क्रीडम् ॥) पारी। स्वानासइन्दवाओवा२३हो

असहीयुर्ऋषिः¶। "पवमानः" सोमः "बृहत्" महत् "वैश्वानरं" वैश्वानराख्यं § "ज्योतिः" तेजः "दिवः" द्युलोकस्य "चित्रं" विचित्रं "तन्यतु न" अशनिमिव ॥ "अजीजनत्" अजनयत् ॥ ८ ॥ १८

* "सुवानास"-इति
† "सुताअर्षन्ति"-इति च } ऋ०, उ०-व्या० वि० च।
‡ उ० ४,२,१,० = ऋ० ६,७,२४,४।
¶ "आङ्गिरसः"-इति ऋषि-नै०।
§ नि० टी० १, २१—२२ खण्डाद्रष्टव्याः।
|| 'तन्यतुं विस्तीर्णम्'-इति वि०। "तनोतेर्यतुच् तन्यतुर्वायुः रात्रिश्च (उ०४, २)'-इति वि० कौ०।

अथ दशमी ।

२ ३ १ २ ३ २र २र ३ १र २र ३ २

परिप्रासिष्यदत्कविः सिन्धोरूर्मावधिश्रितः ।

१ र र १

वार३हा२ईया । मदायबर्हणागिरा । ओवा२३होवा

१ र र १

२३हा२ईया । मधोअर्षन्तिधारयाओ।वा२३होवा२३हा

१ ३ ५र र ३ ५

२ईया२ । वा२३४औहोवा । ऊ२३४पा ॥ १७ ॥

३ र ४ २ ४ ५

( निक्रीडम् ॥ ) पाऽ५री । स्वाना३सा३इन्दवाः ।

१ ऽर १ ऽर १ २ १ र

मदा२यबर्हणा२गिरा । मधो२३अर्षा । ऊर्मिरिवा२ ।

ऽ २ ३ र २ १ २ ४ ५ ४

ई३या । तिधारया । औ३होवा । हो५इ । डा ॥ १८ ॥
॥ १९ ॥

द्वयोः काश्यपोऽसितऋषिः* । "स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" दीप्ताः । "बर्हणा" महत्या† "गिरा" स्तुतिरूपया वाचा "मधो" इति विभक्तिव्यत्ययः(३,१,८५) । मधवो मदकराः सोमाः "धारया" सह देवानां "मदाय" तदर्थं "पर्यर्षन्ति"‡ दशापवित्रादधः चरन्तीत्यर्थः ॥

"मधो"—"सुता" इति साम्नऋचः पाठौ ॥ ९ ॥ १९

---

* "देवलो वा"-इति ऋषि-नैगेयः ।

† 'बर्हणा परिवेष्टनेनेति वि० ।

‡ 'ऋषगतौ ( तु० प० )'-इत्यस्य रूपम् । अर्षति, अरर्षति-इति च गतिकर्मसु नि० २, १४ ।

१ १२ २२ ३ १ २
कारु*म्बिभ्रत्पुरुस्पृहम् ॥ १० ॥ २०†

॥ इति पञ्चम-दशति ॥

॥ इति पञ्चमः प्रपाठकः ॥

५ २ २ १ १ २
(औशनम् ॥) परिप्रासि। ष्यदत्कावी२ः। सिन्धो
२२ ७ १२ १ ३ ५२ २
रूर्मावाधिश्रिता२ः। कारु२३म्। बा२इभ्रा२३४औहो
२ १ ३ १ १ १ १
वा। पुरुस्पृहा२३४५म् ॥ १९ ॥ २०

"परि प्रासिष्यदत्" परिस्यन्दते "कविः" मेधावी "सिन्धोरूर्मावधिश्रितः" आश्रितः सन् "पुरुस्पृहं" बहुभिः स्पृहणीयं "कारुं" स्तोतारं‡ "बिभ्रत्" धारयन् सोमः परिस्यन्दते-इति सम्बन्धः ॥

"कारुं"—"कारम्"-इति पाठौ ॥ १० ॥ २०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः ॥ १ ॥

---

* "कारं"-इति ऋ० ।

† ऋ० ६,८,३,१ ।

‡ "कारुः"-इति स्तोतृनामसु तृतीयं नैघण्टुकम् (३,१६) ।

अथ तृतीये खण्डे—

सैषा प्रथमा।

२३ २३ २ ३२ ३१ २ ३१र २र
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्दन्देवाअयासिषुः॥ १ ॥ २१ *

२ १ र र
(यामानि त्रीणि॥) इहा२इहा। उपोषुजातमा२
१ २ १ र
प्तुराम्। इहा। इहा२इहा। गोभिर्भङ्गम्परा२इष्कृ
१ २ १ र र १
ताम्। इहा। इहा२इहा। इन्दुन्देवाअया२सिषुः।
२
इहा१॥ २०॥

१र र १ र १
ऊपोषुजातमा२प्तुराम्। उपा। गोभा२३इहाँइ।
१ १ र१र
भङ्गम्परा२इष्कृताम्। उपा। इन्दु२३ होइ। देवा
१ २ २
अया२। सिषुरा३१ओवा२३। ऊ३२३४पा॥ २१॥

४ ५र ४र ५ १ २ ३ ऽ २
उपोषौ। होइजाताम्। आप्तू३राम्। औ३हो३
२ १ २ ३ ५ १ ७ १
वा३। गोभिर्भा२३४ङ्गाम्। ओइपारिष्कृता२म्। इन्दू-
र २ ५र र २ र ३ १ १ १ १
२३म्। देवा३४औहोवा। अयासिषू२३४५ुः॥ २२॥ २१

* उ० १,२,१८,२—५,२,२०,१ = ऋ० ७,१,२०,२ = ऊ० ६,१,५ ;—१६,२,११।

अथ द्वितीया।

२ १ २ ३ ३उ २ २ ३ १२
पुनानोअक्रमीदभिविश्वामृधोविचर्षणिः।
३ २ ३ १ २ ३ १२
शुम्भन्तिविप्रन्धीतिभिः॥ २॥ २२ *

५ र र २ ३ ५ १
(वैरूपम्॥) पुनानोआ। क्रामीदा२३४भी। वि-
३ ५ २ ३ ५ १ ३ ५
श्वा२मा२३४र्द्धाः। वीचर्षा२३४णीः। शुभा२ता२३४द्वी।
१ ३ ५र र ३ ५
प्रा२घा२३४औहोवा। तीर२३४भीः॥ २३॥ २२

अमहीयुर्ऋषिः†। "सुजातं" सम्यक् प्रादुर्भूतम् "अप्सु" वसतीवरीभिः प्रेरितं‡ "भङ्ग" शत्रूणाम्भञ्जकं¶ "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् संस्कृतम्। "इन्दुं" सोमं "देवाः" इन्द्रादयः उपायासिषुः "उपगच्छन्ति॥ १॥ २१

§"विचर्षणिः" द्रष्टा॥ "पुनानः" सोमः "विश्वाः" सर्वाः

* उ० ३,१,१२,१ = ऋ० ६,८,३०,१ = ज० १,२,१२;—२२,२,११—१२—१३।

† "आङ्गिरसः"-इति ऋषि-नैगेयः।

‡ 'अप्सु भवतीति अप्सुरम्'-इति वि०।

¶ 'भङ्ग' भज्यते ग्रावभिः'-इति वि०।

§ नेह सायणीयर्षिसंवादो दृश्यते, तदिह च मूलं लेखकप्रमादमित्यनुमीयते, "बृहस्पतिः आङ्गिरसः"-इति तु ऋषि नै०।

‖ "विचर्षणिः"-इति पश्यतिकर्मसु षष्ठं नैघण्टुकम् (३,११)। 'विचर्षणिः विविधं पश्यन्ति सर्वे वा पश्यन्ति'-इति वि०।

अथ तृतीया ।

२　२ ३ १ २　३ २उ　२　१ २ ३ १र　२र
आविशन्कलशꣳसुतोविश्वाअर्षन्नभिश्रियः* ।
३ १ २
इन्दुरिन्द्रायधीयते† ॥ ३ ॥ २३‡

(औशने द्वे ॥) 　५र　र　५　१
आविशन्कालाईशꣳसुताः । वाइ-
२र १ २　१　२　5　२　१ २　२
श्वाअर्षन् । अभाइश्राया३ः । ओ३हा३ । औवा । औ
३ १　१　१　३　५र र　२र
२३४हाइ । इन्दु२३ः । आ२इन्द्रा२३४औहोवा । यधी
३ १ १ १ १·१
यते२३४५ ॥ २४ ॥

"मृधः"¶ शत्रुसेनाः "अभ्यक्रमीत्" अभिक्रामति § । "विप्रं" मेधाविनं तं ‖ सोमं "धीतिभिः"** शुचिभिर्वा "शुम्भन्ति"†† अलं कुर्वन्ति ॥ २ ॥ २२

---

* "स्पृहः,"-इति,　† "शूरोनगोषुतिष्ठति"-इति च ऋ० ।

‡ ऋ० ७, १, २७, ४ ।

¶ "मृधः"-इति सङ्गाम-नामसु विंशं नैघण्टुकम् । 'मृधः—सङ्ग्रामान् जेतुम्'-इति च वि० ।

§ सार्वकालिकोलुङ् (३, ४, ६) ।

‖ "विप्रः"-इति मेधाविनामसु प्रथमं नैघण्टुकम् (३, १५) ।

** "धीतयः"-इति अङ्गुलिनामसु सप्तमं नैघण्टुकम् (२, ५) । 'धीतिभिः-कर्मभिर्बुद्धिभिर्वा'-इति वि० । वस्तुतोधीतिशब्दो बह्वर्थः ।

†† 'शुभ शोभायाम् (भ्वा०प०)'-इत्यस्य रूपम् । 'शुम्भन्ति शोभन्ते अलङ्कुर्वन्ति'-इति च वि० ।

अथ चतुर्थी।

१२३ २३ १२ ३ १२ ३क २र ३ २
असर्जि रथ्यो यथा* पवित्रे चम्वोः सुतः।
१२ ३ १ २
कार्ष्मन्वाजीन्यक्रमीत् ॥ ४ ॥ २४†

४र ३ ४ ५ ३ २ ४ ५ १ २
आविशन्कलशम्। सुता३ः। वाइश्वाः। अर्षन्।
१ २ ३र २ ५ १ २र
अभाइश्रायाः। औहौहोर३४वा। औहौहो१इ। इ-
२ १र २ ५र २ ३
न्दू२रा१इन्द्रा२। य। धीयार्ता२३४औहोवा। ऊ-
५
२३४पा ॥ २५ ॥ २३

‡ "सुतः" अभिषुतः "सोमः" "कलशं" द्रोणम् "आ विशन्" "विश्वाः" सर्वाः "श्रियः" सम्पदः "अभ्यर्षन्"¶ अभितो गमयन् "इन्दुः" दीप्तः सोमः§ "इन्द्राय" इन्द्रार्थं "धीयते" दशापवित्रे अध्वर्युभिर्निधीयते ‖ ॥ २ ॥ २३

* "यथा"-इति ऋ०।

† ऋ० ६, ८, २९, १।

‡ इहापि सायणीयर्षिसंवादोनास्ति। 'असितः काश्यपः'-इति ऋषि-नैगेयः।

¶ "अर्षति"-इति गतिकर्मसु पठ्यते, तस्यैव रूपमिदम् (नै० २, १४)।

§ योगार्थो दीप्तः स इह विशेषणम्, रूढार्थः सोमः स एव विशेष्यं पदम्।

‖ "अभिस्पृहः"-इत्येव विवरण-सम्मतः पाठ, अतएवोक्तम्,—'अर्षन् चरति, अभिस्पृहः स्पृहणीयाः'-इति ॥

अथ पञ्चमी।

२उ ३ १ २१ ३ २ ३ २ ३ १ २
प्रयद्गावो*नभूर्णयस्त्वेषाअयासोअक्रमुः† ।
१ २ ३ २उ ३ २ २
घ्नन्तःकृष्णामपत्वचम्॥ ५ ॥ २५ †

५ २ १र २
(सोमसाम॥) असर्जिरा। थि। योयार२३था। प-
१२र १ ७ २ ५ २र १ २ १
वित्रे। चा। मुवोरःह्वर२३४ता:। कार्ष्मन्वार२३जी। नि-
२ १ ४ ५ ४
यक्रमाइत्। औरर३होवा। होपइ्। डा॥ २६ ॥ २४

प्रभूवसुर्ऋषिः‡। "रथ्योयथा" रथसम्बन्धी अश्व इव स यथा विसृज्यते यद्ध तद्वत् "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः सोमः "असर्जि" "पवित्रे" सृष्टोऽभूत्। तथाभूतो "वाजी" वेगवान्¶ सोमः "कार्ष्मन्"§ कार्ष्मणि युद्धे इतरेतराकर्षणात्। अत्र देवानामाकर्षणवति यज्ञाख्येसङ्ग्रामे "न्यक्रमीत्" नितरां क्रामति॥ ४ ॥ २४

---

* "प्रमेगावी" इति ऋ०।

† उ० ३, १, ३, १ = ऋ० ९, ८, ३१, १।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः।

¶ 'वाजी अन्नवान्'-इति वि०।

§ "कार्ष्मन्"-इति सुब्लुकि रूपम् (७, १, ३९)। युद्धार्थं प्रवृत्तिनिमित्त माह—'इतरेतराकर्षणादिति। यज्ञवाचित्वेऽपि तदेव प्रवृत्ति निमित्तमिति दर्शयन् दृष्टान्तविधिं सङ्गमयति अत्रे त्यादिना।

४ ५ २र र १ २
( काण्वं द्व ॥ ) प्रयद्गाउ। गावोना३भूर्णा१या२३४:।
३र २ १ ऽर र १ २
त्वे षा३:। आया२सोअक्रमु:। घ्नन्ताःका२३ष्णा॒म्। अ
१ २ २ १ ३ ५र र २ ५
पात्वचम्। औहो२हा२३४औहोवा। ऊ३२३४पा ॥ २७ ॥

२ १ २ ४र ५र १ र २ र १ ०
प्रयद्गा३वोनभूर्णयाः। त्वाइषाअया। सोअक्रमू२३:।
१ र ५ १ ३ ५र र १ २ १ ३ १ १ १
घ्ना२३४न्तोहाइ। का२ष्णा२३४औहोवा। अपत्वचा२३४
५म्॥ २८ ॥ २५

मेध्यातिथिर्ऋषिः*। "यत्" ये "भूर्णयः†" क्षिप्राः "त्विषाः" दीप्ताः‡ "अयासः" अयाः गमनकुशलाः "कृष्णां"¶ "त्वम्" "अप घ्नन्तः" अभिषवेण निरस्यन्तः [ त्वचिः सम्वरणकर्मा§ (तु०प०)। इन्दुभूताः सोमाः "प्राक्रमुः" यज्ञं प्रवर्त्तयन्ति। तत्र दृष्टान्तः—"गावोन" उदकानीव॥ तानि यथा क्षिप्रमधः पतन्ति तद्वत्। गावएव वा उपमीयते तायथा स्वगोष्ठकाशु

---

* "काण्वः"-इति ऋषि० नै०।

† 'भूर्णयः भरणशीलाः'-इति वि०। भूर्णयः-भ्रमणशीलाः, भरणशीलाश्चान्यत्र (प्र० ६१० पृ० द्र०);

‡ 'त्विषदीप्तौ' (भ्वा० उभ०)'-इत्यस्य रूपम्। 'दीप्ता-महान्तः'-इति वि०।

¶ कृष्णां रात्रिं कृष्णारूपाम्, अपत्वचं अपर्णां रात्रेः कृष्णांश'-इति वि०।

§ सम्वरणमाच्छादनम्।

‖ गोशब्दो बवर्थः परमुदकार्थो न नैघण्टुकः।

अथ षष्ठी।

२ १ २ ३ १ २ २ १ २ २ २
अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः।
३ १र २र ३ १ २
नुदस्वादेवयुंजनम् ॥ ६ ॥ २६ *

५ ४र ५ १ २
(वैश्वदेवम् ॥) अपघ्नौ। होइपावा। साइमा१र्द्धा
१ २ र १ २ १ १
२ः। क्रातुवित्सो। ममात्सा१रा २ः। नुदा२३। स्वा-
३ ५र र २ १ १ १ १ १
२दा२३४औहोवा। वयुंजना२३४५म् ॥ २९ ॥ २६

गच्छन्ति† तद्वत्। अथवा गावः स्तुतिवाचः‡ ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति, तद्वत् यज्ञं प्रवर्त्तयन्ति¶ तान् स्तुवे—इति शेषः ॥

"यत्"-'ये" इति साम्नश्च: पाठौ ॥ ५ ॥ २५

अस्याः परस्याश्च निध्रुविर्ऋषिः§। हे "सोमः !" "मत्सरः" मदकरः ‖ यः त्वं "मृधः" हिंसकान् शत्रून्** "अप घ्नन्" मारयन्

---

* उ० ५, १, १५, २ = ऋ० ७, १, ३४, ४ = ऊहे ४, २, १७ — १८ — १९ — २० ;—१७, १, १ ;—ऊह्ये १, २, २।

† अरुण्यो गाव उषसां वाहनभूताः (१, १५ नै०)।

‡ निघण्टु-प्रथमैकादशं द्रष्टव्यम्।

¶ 'गावः रश्मयः'-इति वि०। 'गावः'-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५)।

§ "काश्यपः"-इति ऋषि-नैगेयः।

‖ 'मदनीयोभक्षणीयश्च'-इति वि०।

** 'मृधः सङ्ग्रामान् पाप्मनश्च'-इति वि०।

अथ सप्तमी ।

१ २　३ १ २ २ २ ३ २ ३ १ २
अयापवस्वधारयायययासूर्यमरोचयः ।
३ १२ २२ ३ २
हिन्वानोमानुषीरपः ॥ ७ ॥ २७*

(वैश्वदेवꣳसूर्य्यसाम ॥) एअयापवा । स्वधा२ । र
या३१उवा२३ । ऊ३४पा । ययासूर्यमरो२ । चया३१
आवा२३ । ऊ३४पा । हिन्वानोमानुषा२२हूँहोइ । आ-
पआ३१उवा२३ । ऊ२३४पा ॥ ३० ॥ २७

"क्रतुवित्" अस्मभ्यं प्रज्ञां प्रयच्छन्† "पवसे" चरसि स त्वं "अदेवयुं" अदेवकामं जनं‡ राक्षसवर्गं "नुदस्व" प्रेरय ॥ ६ ॥ २६

हे सोम ! "मानुषीः" मनुष्याणां हितानि¶ "अपः" उदकानि "हिन्वानः" प्रेरयन्§ त्वं "यया" धारया "सूर्यम्"

* उ० ५, १. ८, १=ऋ० ७, ३१, २ ।

† 'क्रतुवित् कर्मवित्'-इति वि० ।

‡ यो देवान् यष्टुं न कामयते इत्यर्थः ।

¶ 'मनुष्याणां भवाः'-इति वि० ।

§ हिन्वान इति 'हिवि प्रीणने ( स्वा० प० )'-इत्यस्य रूपम् । 'हिन्वानः सेवमान -इति वि० ।

अथाष्टमी।

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
सपवस्व यआविथेन्द्रं वृत्राय हन्तवे।
१ १ २ ३ २ ३ २
ववृवांऽ्सं* महीरपः॥ ८॥ २८ †

२ २ २ ३ ५ १
(वार्त्रघ्नम्॥) सहो३४३इ। पवस्व। यआ २
१ २ १ २ १ २ ३ ५ १ २ ४ ५
विथा। इन्द्रं वृत्रा३। याहन्ता२३४वे। ओवा३ओवा।
२ १ २ १ २र १ २ ४ ५ ४
वव्रिवा२३ऽ्साम्। माहीरपा। औ३होवा। हो५इ।
डा॥ ३१॥ २८

"रोचयः" प्रकाशयः। तथा "अया" अनया धारया "पवस्व" चर॥ ७॥ २७

अमहीयुर्ऋषिः‡। हे सोम! यस्त्वं "महीः" महतीः "अपः" महान्त्युदकानि "वव्रिवांसं" निरुन्धानं¶ "वृत्राय" वृत्रं§ "हन्तवे"‖ हन्तुं "इन्द्रम्" "आविथ" अरक्षः** 'स' त्वं "पवस्व" धारया चर। सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानिरुन्धानं वृत्रं जघानेत्यर्थः॥ ८॥ २८

---

* "वव्रिवांसं"-इति सर्वव्याख्यातृ-सम्मः पाठोगानग्रन्थसम्मतश्च।
† ऋ० ७, १, २२, २।
‡ "आङ्गिरसः"-इति ऋषि-नैगेयः।
¶ 'वव्रिवांसं चरणस्वभावम्'-इति वि०।
§ 'वृत्राय मेघाय' इति वि०।
‖ "तुमर्थे सेसेन् (३, ४, ९)"-इत्यादिना सिद्धम्।
** 'आविथ अवेक्षपं यार्थस्य, तर्पयसि'-इति वि०।

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ २ ३ २
अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।
३ १ २ ३१ २र
अवाहन्नवतीर्नव॥ ९॥ २९*

५ र र २र १
(सोमसामानि त्रीणि॥) अयावीती। पारिस्रवा।
२ १ २र १ १ २ २ २ १
यस्तइन्दाउ। मादाइषुवा। अवाहाइन्नाइ। वतो२३
५ ४ ५
४वा। नाप्वोवाइहाइ॥ ३२॥

२ १र र २ २र १ २ २र २ २र र
अयावीता। औहोवा। औहो३४इ। औ। होर।
२ ५र र १ २ १ २ २र १
वार३४। औहोवा। परिस्रव। यस्तइन्दा। औहो
२ २र २र १ २ ५र र
वा। औहो३४इ। औ। होर। वा२३४। औहोवा।
१ ५र १र र २ ३र १ २ ३र २
मदे२षुवा। अवाहन्ना। औहोवा। औहो३४इ।
२र १ ३ ५र र २ १र १ १ १ १
औ। होर। वार३४। औहोवा। वतीर्नवार३४५॥ ३३॥
४ ३ र ४ २ ४ ५ १ २ र १
अयाऽपूवी। ताइइपाइरिस्रवा। यास्तइन्दो। मदा

* उ० ५, १, ६, १ = ऋ० ९, ७, १९, १।

अथ दशमी ।

१ २ ३ १२ २२३२उ ३१ २ ३ १ २
परिद्युक्षᳩसनद्रयिम्भरद्वाजंनोअन्धसा ।
२ १ २ ९ ३२२१ २ ४ ५
इषूश्वा२। अवाहा३न्ना। वतीर्नवा। औ३होवा।
४
हो५इ। डा ॥ ३४ ॥ २९

अमहीयुर्ऋषिः* । हे "इन्द्र" सोम ! "अया" अनेन रसेन "वीती"† वीत्यै इन्द्रस्य भक्षणाय‡ "परिस्रव" परिक्षर। कीदृशेन रसेनेत्यत आह "ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु¶ "नवतीर्नव" नवनवति-सङ्ख्याकाः§ शम्बरपुरीः‖ "अवाहन्" जघान (अमुं सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकान् शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्युपचारः ॥ ८ ॥ २९

---

* "आङ्गिरसः"-इति ऋषि-नैगेयः।

† पा० २, २, ९६। ७, १, ३९।

‡ "वीतिः कान्तिः, मार्गो वा तेन परि स्रव परितः समन्तात् स्रव'-इति वि०। इह नये कान्तिकर्मणोवेतेरिदं (नै० २, ६, ३) रूपमिष्टम्।

¶ 'मदेषु पुरतोऽवस्थितेषु'-इति वि०।

§ अष्टौशतानि दशोत्तराणि।

‖ शम्बरइति निघण्टौ मेघनामसु (१, १०)—उदकनामसु (१, १२) बलनामसु (२, ९) च दृश्यते। ऐतिहासिकस्तु शम्बरनाम दैत्यविशेषः, तद्वधोपाख्यानं भागवतादौ (१०, ५५) द्रष्टव्यम्।

३ १ २ ३२३२
स्वानोअर्षपवित्रआ ॥ १० ॥ ३० *

॥ इति प्रथम-दशति ॥

(भारद्वाजम् ॥) परिद्युत्ताम्। औहोइ। सनद्रायी२म्। भरद्वाजा२म्। औहोइ। नोअन्धासा२३४। स्वानो३४अर्षा३। पवोवा। त्राप्युयोईहाइ ॥ ३५ ॥ ३०

॥ इति ग्रामे गेये त्रयोदशः-प्रपाठकः ॥

उचथ्यऋषिः†। "द्युच्" दीप्तं‡ "सनत्" दीयमानं¶ सैन्य वा "रयिम्" धनं यस्य तादृशं "वाजं" बलं "अन्धसा"§ अन्नेन सह सोमः "नः" अस्माकं‖ "परिभरत्" परतोहरतु प्रयच्छत्वित्यर्थः। अथ प्रत्यक्षस्तुतिः--हे सोम! "स्वानः" सुवानोऽभिषूयमाणस्त्वम् "पवित्रे" "आर्ष" आभिमुख्येन-चर।

"द्युच्‌सनद्रयिं"-"द्युचःसनद्रयि"-इति, "स्वानः"-"सुवानः"-इति च साम्नऋचः पाठौ ॥१०॥ ३०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* ऋ० ७, १, ९, १।

† "आङ्गिरसः"-इति ऋषि. नि०।

‡ "द्युतौ चियन्तइति द्युक्षम्"-इति वि०।

¶ 'सनत् चिरन्तनम्'-इति वि०।

§ 'अन्धसा तर्पितः'-इति वि०।

‖ "नः अस्मान् प्रति'-इति वि०।

अथ चतुर्थे खण्डे—

सैषा प्रथमा ।

१ २　३ २　३ १ २ ३ २　३ १र　२र ३ २
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
१र २र
सᳫंसूर्येण दिद्युते ॥ १ ॥ ३१

ओम् ॥ (वार्षाहरम् ॥) अचिक्रदा३त् । अचिक्रदा५दे । वृषाहरा३इ । वार्षाहरा३इ । वृषाहरा५ए । महान्मित्रा३ः । माहान्मित्रा५ए । महान्मित्रा५ए । नदर्शता३ः । नादर्शता३ः । नदर्शता५ए । सᳫंसूरिया३इ । साᳫंसूरिया३इ । सᳫंसूरिया५ए । णादिद्युता३इ । णादिद्युता३इ । णदा५इद्युताउ । वा ॥ १ ॥ ३१

मेध्यातिथिर्ऋषिः† । "वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" पूज्यः "मित्रोन" यथा सखा तद्वत् । "दर्शतः" दर्शनीयोयः सोमः "अचिक्रदत्" शब्दङ्करोति सोयं सोमः "सूर्य्येण" सह "दिद्युते" दिवि प्रकाशते ॥ [ "दिद्युते"-"रोचते" -इति साम्नऋचः पाठौ ॥ १ ॥ ३१

* उ० ४, १, २, ९ = ऋ० ६, ७, १९, १ ।

† "काण्वः"-इति ऋषि-नै० ।

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आ ते दक्षम्मयो भुवं वह्निमद्या वृणीमहे ।
३ १ २ ३ १ २
पान्तमा पुरुस्पृहम् ॥ २ ॥ ३२*

५ र र २ १ २ २
( वार्षाणि त्रीणि ॥ ) आतेदक्षाम् । मयोभूइवाम् ।
१ २ १ ७ ३ ५ १ २ ५ २
वह्निम । द्या । वृणीरमार३४ हाइ । पान्तमाइ । ईइया ।
१ १ ३ ५ र र २ ५
पुरू२३ । स्पृरहा२३४ औहोवा । ऊ३२३४पा ॥ २ ॥
२ ३ ५ २ ३ ५ २ व
आतेदा२३४क्षाम् । मायोभू२३४वाम् । वह्नि-
३र व ५र ३ ५ १ २ २ ५ २
मद्यावृणी । महो२३४ हाइ । पान्ता३मा३ । ईइया३ ।
१ ३ ५र र ३ ५
पू२रुहू२३४ औहोवा । स्पृ२३४हाम् ॥ ३ ॥
३र ४र ३ ४ ५ ३ ५ ३ ४ ३र ४ ५ र
आतेदक्षम्मयः । भुवो२३४हाइ । वह्निमद्यावृणी ।
३ ५ १ २ १ २ १
महो२४४हाइ । पान्ता१मा२ । पूरुस्पृहम् । इडा२३
२ १
भा३४३ । ओ२३४५इ । डा ॥ ४ ॥ ३२

---

* उ० ४, २, २, १० = ऋ० ७, २, ७, ३ ।

अथ तृतीया ।

१ २ ३ १ २　३ १र　२र ३ २ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमम्पवित्र आनय ।
३ १ २　३ १ २
पुनाहीन्द्रायपातवे ॥ ३ ॥ ३३*

२ १　५　२ १　२ २
(वैरूपे द्वे ॥) अध्वर्यो२३४आ । द्रिभाइः सुइता

१र　३　५　१ २　१
३म् । सोमा२म्पा२३४वी । त्राआ१नाया२ । पुना-

र २　५र र　२र १ २ २ १ १ १ १
२३ । हीन्द्रा३४औहोवा । यपातवे२३४५ ॥ ५ ॥

४ ५ र　ध　५　२ १　६ १ २
अध्वर्यौ । होअद्री । भिःसुतम् । औ३हो३वा३ ।

भृगुर्ऋषिः† । हे सोम ! यष्टारोवयं "तं" तव स्वभूतं "दक्षं" बलम् "अद्य" अस्मिन्यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे । कीदृशम् ? "मयोभुवं" सुखस्य भावयितारं "वह्निं" धनादीनां प्रापकम्‡ "पान्तं" शत्रुभ्योरक्षकम् । "पुरुस्पृहं" बहुभिः स्पृहणीयं काम्यमानम्बलमिति ॥ २ ॥ ३२

---

* उ० ५, १, ११, १ = ऋ० ७, १, ८, १ = ऊहे ४, १, २० ;—४, २, १—२—३—४—५—६ ;—१६, २, १३—१४ ।

† 'वारुणिः—भार्गवो वा जमदग्निः'-इति ऋषि-नै० ।

‡ 'वहेयागिकार्थएवेष्टः (भा० उ०) ।

अथ चतुर्थी।

३ २ ३ २ ३ १ २ ३ १ २   ३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषा हेमनापूयमानोदेवोदेवेभिःसमपृक्तरसम्।
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्मितेव सद्मपशुमन्तिहोता॥४॥६०॥*

(अगस्त्यस्य यमिके द्वे ॥) अस्या३४औहोवा। प्रेषा। हे३
मना। पूयमानाः। उहुवाइ। अस्या३४औहोवा।
प्रेषा। हे३मना। पूयमानाः। हाइ। उहुवा।
देवा३४औहोवा। देवाइ। भी३:सम। पृक्तरसाम्।

धीतिः। अथवा ऋतस्य सत्यस्य ब्रह्मणः। अथवा ऋतस्य धीति यज्ञस्य वा आदित्यस्य वा इय इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'ब्रह्मणो मनीषा गावः रश्मयः तेन विहृष्टा अथवा उदकानि। एतमेव गोपतिं रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथिवीं वसाना सर्वोपकाराय सोमं आदित्यं मतयः। प्रज्ञायते विषयाः अतिप्रकाशन्त इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मे वह्निरात्मा भवति। वर्णादिगुणसंयोगात्। सः तिस्रो वाचः प्रेरयति। विद्या बुद्धिमनांसि। विद्या महान्। बुद्धिरहङ्कारं मनइति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीतिं मनसः इष्टानि कर्माणि प्रेरयन्ति ब्रह्मणः आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं तदभिप्रायेण शब्दाद्यनुगमनात्। एतमेवमात्मानं सोमङ्कामयमाना इव यन्ति न भूयः तदर्थं प्रादुर्भवन्ति'-इति।

* उ० ६, २, ८, १ = ऋ० ७, ४, ११, १ = ऊह६'२। ७,

२ २ १२ ३र ४र ५ १ २ १
हाउ। होइ। सुता३४औहोवा। पवाइ। त्रा३म्परि।
२ ३ ४ ५ २ र २ २ ३र ४र ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ २ ३ ४ ५ १ २ २ ४
ह्या३पशु। मन्तिहोता। पशु। मा३४३। तीइहोपू
ताई५६॥ ४॥

१र २र ३र २ १ ३ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ ३ ४ ५ २र १र र २ १ २ ३ ४ ५
पूयमानाः। देवोदेवाइ। भीइःसम। पृक्तरसाम्।
२ १ २ १ २ ३ ४ ५ १र २र ३र २
सुतःपवाइ। त्रा३म्परि। एतिरेभान्। औहोवाहा-
१ ३ २ १र २ १ २
३होइ। इहा। मितेवसा। ह्या३पशू। मा३४३।
२ ४
तीइहोपूताई५६॥ ५॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [ प्रेषतिर्गत्यर्थः (भ्वा०प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं † प्रेषा ] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-नै०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ बाहुलकादल्लोपाभावः।

अथ पञ्चमी।

१ २     ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
सोमःपवतेजनितामतीनाञ्जनितादिवोजनितापृथिव्याः।
७ १२ २२ ३ १२ २२ ३ १ २ ३ १२ २२
जनिताग्नेर्जनितासूर्यस्यजनितेन्द्रस्यजनितोतविष्णोः॥५॥६१*

२२ २ २ १
(कालकाक्रन्दौ ॥) सोमःपवतेजनितामा३ताइना २म्।
२ २ २ १ १२ २ २
जनितादिवोजनितापृ३थाइव्या २ः। जनिताग्नेर्जनितासू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवो" दीप्य-मानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृची सम्पर्के (अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्म्मितं‡ "पर्येति" परिगच्छति। कथमिव? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्म्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्येति तद्वत्॥ ४ ॥ ६०

---

* उ० ३, १, १९, १ = ऋ० ७, ४, ६, ५ = ऊहे ३, २, १९ ;—८, २, १ ;—१२, १, १०—१६।

† 'देवेभिः देवेभ्यः वस्त्रादिभ्यः'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ होतेति व्हेञोरूपम् (६, १, ३४ पा०)।

§ 'मिता कर्त्ता' इति वि०।

० २ १र २ १ २ २
रियार३स्या। जनितेन्द्रा। स्या३जनि। ता३४३। तार
४
वा५इष्णो६५६ः ॥ ६ ॥

३ ४ ५ र र २ २ ४ १
सोमःपवतेजनिता। ए३। औ३हो५वाऽ। माता
२ १र २ १र २१र २ १र
२३४५इना६५६म्। जनितादिवोजनितापृथिव्याः। जना-
३ ५ २ र २ ४
२इता२३४ग्नेः। जनिता। स्र३४३। री३या५स्या६५६।
२ १र २ १र ३ ११११
जनितेन्द्रस्यजनितातविष्णो२३४५ः ॥ ७ ॥

५र ४ ४ ५
(जनित्रे द्वे ॥) हाउजनत्। ३। जनद्धाउ। ३।
१ १ २र १ २
होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३
१ २ ३ ४ ५ २ १र २ १ २ १
जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ
५ ५ २ १र २ १ र २ ३ ४ ५ ५र
थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ
४ ४ ५ १
जनत्। ३। जनद्धाउ। ३। होइ। जनत्। २। होइ।
१र २ २ २ ४
जनात्। जनितेन्द्रा। स्या३जनि। ता३४३। ता३वा।
५इष्णो६५६ः ॥ ८ ॥

४ ५ ४ ५ १
जनद्वाउ । ३ । जनदाउ । ३ । जनत् । होइ । ३ ।
२र १ २ १ २ ३ ४ ५ २ १र
सोमःपवा । ते३जनि । तामतीनाम् । जनितादाइ ।
२ १ २ ३ ४ ५ २ १र २१र२ ३ ४ ५
वो३जनि । तापृथिव्याः । जनिताग्नाइ । जनितासूरियस्या ।
४ ५ ४ ५ १ र २
जनद्वाउ । ३ । जनदाउ । ३ । जनत् । होयि । ३ । जनि-
१ र २ १ २ २ ४
तेन्द्रा । स्या३जनि । ता३४३ । ता३वापृथिष्णो६५६ः

॥ ९ ॥ ६१

प्रतर्दनऋषिः* । "सोमः" अभिषूयमाणः "पवते" पात्रेषु चरति । कीदृशः ? "मतीनां" बुद्धीनां । यद्वा । मननीयानां स्तुतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३ ) इति निपातेन णि-लोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता । तथा "पृथिव्याः जनिता" । "अग्नेः" "जनिता"

---

* "दैवोदासिः"-इति वि० ।

† अत्रेदं विवरणम्—'सोमः पवते । विनियोगोऽस्य चतुर्थेऽहनि । अधियज्ञपक्षे पर्णसोमस्य पृथिव्यादीनां । जनयितृत्वेन सम्भवात् । यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता । इन्द्रस्य जनयिता । उत अपि विष्णोर्व्याप्तिमत इति । जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता । अधिदैवेनेन्द्रः सोमः यदात्मनि तदायमर्थः । सर्वमिदं श्रयति । आत्मा सोमः पवते साधयति भोक्तृत्वात् । आत्मा सत्कारणं वा । प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च द्योर्दर्शनान्तरिक्षमपि अग्न्यादीनाञ्च स्थानानां तिसॄणां विष्णोश्च व्याप्तिमतः ॥"

अथ षष्ठी।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २

अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिण॰मवावशन्तवाणीः।

३ १ २ ३ १ २ ३ २ उ ३ १ २ ३ १ २ ३ १ २

वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्याणि॥ ६॥६२॥‡

(अङ्गिरसां व्रतेपोह्वः॥) ओ२हायि। ओ२हा। ओहा।

हुया२। ओ२हा२ए। अभित्रिपा। ष्ठा२०वृष। णंव-

योधाम्। अङ्गोषिणाम्। अवाव। शन्तवाणीः।

वनावसा। नो२वरुणोनसिन्धूः। ओ२हायि। ओ२-

हा। ओहा। हुया२। ओ३हा२ए। विरत्नधाः।

दयते। वा२४३। रो३यापुणाई५ईयि॥ १०॥ ६२

प्रकाशयिता। "सूर्य्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता। "उत" अपि च। "विष्णोः" व्यापकस्य "जनिता" जनयिता¶। एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्तइति॥ ५॥ ६१

---

* "आङ्गूषाणाम्"-इति, † "सिन्धून्"-इति च } ऋ०।

‡ उ० ६, २, ११, १=ऋ० ७, ३, २६, २=ऊहे ७, २, १०।

¶ अत्राह यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाश-कर्मणा मादित्यरश्मीनां दिवो द्योतनकर्मणा मादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा

अथ सप्तमी ।

१ २ ३१ २ ३१र २र ३ १ ३ ३१र २र १ २
अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य गोपाः* ।

वसिष्ठऋषिः† । "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम् । "वृषणं" वर्षकम् । "वयोधाम्" अन्नस्य दातारम्‡ । "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा । "वना" वनानि उदकानि "वसानः" । आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत् । "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि‖ "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६ ॥ ६२

---

मादित्यरश्मीनां, सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनां, विष्णोर्व्याप्तिकर्मणा मादित्यरश्मीनामित्यधिदैवतम् । अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपिवा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगति माचष्टे"—इति प० २, १२ ।

* "भुवनस्यराजा"—इति ऋ० ।

† "मैत्रावरुणः"—इति ऋषि-नै० ।

‡ "सुतः", "सुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमनैघण्टुककाण्डे न श्रयन्ते (२, ७)। 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि० ।

¶ "आङ्गूषस्तोमआघोषः "एनाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्रवन्तः"—इत्यादि नि० ५, ११ ।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४ ।

‖ 'वार्याणि वननीयानि धनानि'—इति वि० ।

१ २ ३ १ २ २ ३ २ ३ १ २३१र २र २ १र
वृषापवित्रे अधिसानो अव्येबृहत्सोमोवावृधेस्वानो*-

२र
अद्रिः ॥ ७ ॥६३†

२ १ १ २र १ २ १र २ १
(सम्यावैयश्वम् ॥)हो। होपि। अक्रांत्समुद्रःप्रथमेविधामान् ।
१ २ १ २ १ २ र १ १ १ र
होहोयि । जनयन् प्रजाभुवनस्यगोपाः । हो। होयि वृ
२र १ २र १ २ १र र५ १ २ १
षापवित्रे अधिसाने ा२अ। व्यायि। हो। हो। वृह
र र ७र र र १र र २ र र २
त्सोमो२वावृधेस्वाने ा३अ। द्रा। औ३। होवाहाउवा
२ २र १र १ १ १ १
३। ए३। स्वानाअ। द्रौ२३४५ः॥ ११ ॥ ६३

पराशरऋषिः‡। "समुद्रः" अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्म्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन् "अक्रान्" सर्व्वमतिक्रामति [क्रमते-र्लुङि, तिपि, इड़भावे वृद्धौ च कृतायां सिज्लोपे मकारस्य

---

* "सुवान"—इति ऋ० ।

† उ० ५, २, १, १=ऋ० ७, ४, १८, ५= ऊहे १७, २, १;—२२, २, ५—८—९; ऊह्ये६, २, ५ ।

‡ "प्राशरः"—इति ऋषि-नै० ।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् ( १,१२ )।

अथाष्टमी।

१ २　 ३ २ ३ २ ३ १ २ ३ २ ३ १ २　३ १ २　३ २

कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः।

१ २ ३ १ २　 ३ २ ३ १ २　२ २ ३ १ २　　३ १ २

नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः॥८॥६४ *

मोनोधातोरिति नकारे रूपम्] "वृषा" कामानां वर्षिता "स्वानः" अभिषूयमाणः† ॥

"अद्रिः"-"इन्दुः" इति च साम्नऋचः पाठौ ॥ ७ ॥ ६३

---

* ऋ० ७, ४, ५, १।

† अत्रेदं विवरणम्—

अक्रान् समुद्रः विनियोगोऽस्य नवमेऽहनि, क्रान्तत्वात् प्रथमे परमे उत्कृष्टे विधर्मणि धारणेन नयन् प्रजाः प्रजायन्त इति प्रजाः देवाः याः भुवनस्य गोपाः भूतानां रक्षिता वृषा सक्ता पवित्रे वा लमाय। अधि उपरि सानौ समुत्थन्तौ अव्ये अविमये। बृहत्सोम वावृधे वर्द्धते स्वानः अद्रिः अदरणः। वज्रः अक्रान् समुद्रः सामर्थ्यात् अत्यक्रमीत् अतीतं गच्छत्युदयादस्तं सदा समुद्रः। आदित्यः प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे प्रजा जनयन् वर्षकर्मणा। भुवनस्य त्रैलोक्यस्य गोपा रक्षिता वृषा वर्षणशीलः। पवित्रे व्याप्तिमये अधिसानः अभिषिच्यमाणः सौम्यैः। वावृधे वर्द्धते बृहदिति बृहद्विशेषणम्। स्वानः सुतः अद्रिरादित्य अदरणः अत्यक्रामत् अधिष्ठितवान्। समुद्रः आत्मा अभिद्रवत् तं भूतानि परमेभ्यः घने भूतेन्द्रियमिश्रशरीरे जनयन् ज्ञानकर्मणा बोधमुत्पादयन् प्रजा वर्द्धयन्। भुवनस्य गोप्ता प्रकाशरूपत्वात्। वृषा पवित्रे सत्यमये आत्मा वर्षिता भवति शरीररूपेण पवित्रे ज्ञानमये अवतेर्गत्यर्थः। गत्यर्थाश्च बुद्ध्यर्थाः। अधिसानौ सम्बध्यमान-शब्दादिषु महत्त्वदृधे सुष्ठु वर्धितं पवित्रे। प्रवः अद्रिः अदरणः"—इति ॥

यास्कस्त्वेवं व्याख्यातवान्—"अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा। वृषा पवित्रे अधिसानौ अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यधिदैवतम्। अथाध्यात्ममत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा। वृषा पवित्रे अधि सानौ अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे"—इति प० २,१६।

४ ५ १ १ २ १
(सामसामनि द्वे॥) कानी। क्रान्ती२क्रान्ती२। हरिराहज्य-
२ ४ ५ १ २१२
मा२३ना३ः। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
२ ४ ५ १ १ २ १ २
ना३ः। द्रभीः। याता२याता२ः। कृणुतेनिरिर्णिजा२३-
२ ४ ५ १ १ १ १ २
गा३म्। आताः। माती२म्माती२म्। जनयता२३स्वा२न्धा
५२२ २ ११११
२३४औहोवा। भी२३४५ः ॥ १२ ॥
३ ४ ५ २ २ २२२ ३ २ ३ ५
कनिक्रन्तिहा। होयि। हरिराहज्य। मा२३४ना।
२२ १ २ २२१ २ २२ १
हाहोयि। सोदन्वनस्यजठरेपुना२३नाः। हाहोयि। नृभि
२ २ १ २ २ १ २
र्यतःकृणुतेनिर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
७ १ ३ ५२२ २ ११११
जनयता२३। स्वा२धा२३४औहोवा। भी२३४५ः ॥१२॥६४

प्रस्कण्व ऋषिः*। "सृज्यमानः" आ समन्ताद्धि सृज्यमानोऽभिषूयमाणः† "हरिः" हरितवर्णः सोमः "कनिक्रन्ति" पुनः पुनः शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्त्तिदर्धर्ती त्यादिना‡ निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः¶ ]

---

* "काण्वः"-इति ऋषि-नै०।

† 'सृज्यमानः संसूयमानः'-इति वि०।

‡ "दाधर्त्ति दर्द्धर्ति दर्द्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदद् भरिभ्रद् दविध्वतो दविद्युतत् तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च"—इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादिः"-इति पा० ६, १, १८९।

अथ नवमी ।

३ २उ ३ १ २    ३ १ ३ १२ २ ३ १ २ ३ १ २
एषस्यतेमधुमाꣳइन्द्रसोमोवृषावृष्णःपरिपवित्रेअक्षाः ।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ उ ३क २र
सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात् ॥९॥६५*

४ ५ ४ ५ ३ २    ४ ५ र ४र ५
(ऐषम् ॥) एषाएषाः । स्यता३१२३४यि । मधुमाꣳइन्द्रसोमः ।
र ३ २ ५ ४ ५र र
वृषावृषाइए । वृष्णो३१२३४ः । परिविवित्रेअक्षाः । सहस्रा
५ ३ २ ५ ४र ५ ४र ५र ५
इए । स्रदा३१२३४ः । शतदाभूरिदावा । शश्वच्छश्वाइदे ।
१ २ र ५र ४ ५ ५ ५
तमा३१२३४म् । बर्हिरावाजिपे । हियाइहाउवा स्था२
१ १ १ १
२३४५त् ॥ १४ ॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कलशस्य "जठरे" "सीदन्" उपविशन् शब्दायते । किञ्च "नृभिः" कर्म्मनेतृभिर्ऋत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् चीरादीन् आच्छादयन् "निर्णिजं" शुद्धम् आत्मनोरूपं † "कृणुते" ग्रहादिषु करोति । अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [ झस्यान्तादेशाभावः छान्दसः । अदादेशः ] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत् ॥ ८ ॥ ६४

---

* ऋ० ७, ३, २१, ४ ।

† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम् ( ३, ७ ) ।

अथ दशमी।

१ २ ३ १ २ ३ १ ३ १र २र ३ २ ३ २ ३ १ २
पवस्वसोममधुमा ऋतावापोवसानो अधिसानो अव्ये।

३ १ २ ३ १ २ ३ १ १ ३ १ २ ३
अवद्रोणानिघृतवन्ति*रोहमदिन्तमोमत्सरइन्द्र-

१ २
पानः ॥ १० ॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशनाऋषिः‡। हे इन्द्र! "वृष्णः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यर्थे षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्य्यत्ताः" पर्य्यस्रवत् [क्षरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता „शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति ॥

"वृषा वृष्णः"-"वृषा वृष्ण"—इति, "सहस्रसाः"-"शतसाः" इति च साम्नऋचः पाठाः ॥ ८ ॥ ६५

---

* "घृतवान्ति"—इति ऋ०।

† ऋ० ७, ४, ८, ३।

‡ "काव्यः"—इति ऋषि-नि०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् (२, ३, ६२)"—इति कात्यायनवचनादित्यर्थः।

§ "स्यश्छन्दसि बहुलम् (पा० ६, १, १३३)"--इतीह नन्ते स्य इत्यस्य सोर्लोपः।

‖ "आतोमनिन्क्वनिब्वनिपश्च (पा० ३, २, ७४)"—इति वनिपि रूपम्।

२ ३ ५ ३ २
(माधुच्छन्दसम् ॥) हाओ२३४हाइ। इहा३१।

२१ २ १ २ ३ ४ ५ २ १र
पवस्वसो। मा३मधु। मा२ ऋतावा। अपोवसा।

२ १ २ ३र ४ ५ २ १ र २ १
नो३अधि। सानोअव्याइ। अवद्रोणा। नी३घृत।

२ ३ ४ २ २ ३ ५ ३ २ २ १
वन्तिरोहा। हाओ२३४हाइ। इहा३१। मदिन्तमो।

२ १ २ २ ४
मत्सरः। आ३४३इ। द्रा३पा५ना६५६ः॥ १५॥ ६६

प्रतर्दनऋषिः*। हे "सोम!" "मधुमान्" [मत्वर्थीयः] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानौ" समुच्छ्रिते "अव्ये" अविभवे-पवित्रे "पवस्व" चर। ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवतः† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि॥

"रोद"-"सीद"—इति पाठौ॥ १०॥ ६६

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः॥ ६॥

---

* "दैवोदासिः"—इति ऋषि-नै०।

† "घृतम्"—इत्युदकनामसु दशमं नैघण्टुकम् (१, २)।

अथ सप्तमे खण्डे--

सैषा प्रथमा।

१ २ ३ २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीः शूरो अग्रे रथानाङ्गव्यन्नेति हर्षते अस्य सेना।
३ २ ३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवांत्सखिभ्य आ सोमो वस्त्रा रभसानि-

दत्ते॥ १॥ ६७*

३ ५ ३ ५
(कुत्सस्याधिरथीयानि त्रीणि॥) हो४वा। उहुवा

४ ५ २ १र २र १ र र २ २ ३ ४
३। होवा। प्रसेनानाइः। शूरोआ३। ग्राइरथा
५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम्। गव्यन्नेताइ। हर्षताइइ। अस्यसेना। भद्रा
१ १ २ २ ३ ४ ५ २र १र २र १
न्कृण्वान्। इन्द्रहा३। वांत्सखिभ्याः। आसोमोवा।
२ १ २र ३ ४ ५ ३ ५ ३ २ ४
स्त्रा३रभ। सानिदत्ताइ। हो४वा। उहुवा३। हो
५ ५
वा६। हाउवा॥ १६॥

५र ४ २ १११ २ १र २र १ र र २ २
औहो३वा३४५। प्रसेनानाइः। शूरोआ३। ग्रोइ
३ ४ ५ २ १ २र १ २ २ ३ ४ ५
रथानाम्। गव्यन्नेताइ। हर्षताइइ। अस्यसेना।
२ १र २ १ २ २ ३ ४ ५ र ४
भद्रान्कृण्वान्। इन्द्रहा३। वांत्सखिभ्याः। औहो३

* ऋ० ७, ४, ६, १।

२ १११   २र १र २र १   २ १   २   २
वा३४५। आसोमोवा। स्वा३रभ। सा३४३। नी३
४
दा५त्ता६५६इ ॥ १७ ॥

५र४ २ १११   ३र२र १   र र २   २
औहोश्वा३४५। प्रसेनानाइः। शूरोआ३। ग्राइ
३ ४ ५   ३ २र १   २   २ ३ ४ ५
रथानाम्। गव्यन्नेताइ। हर्षता३इ। अस्यसेना।
३ र २ १   २   २ ३ ४ ५   र ४ २
भद्रान्कृण्वान्। इन्द्रह्वा३। वांत्सखिभ्याः। औहोश्वा
१११   ३र र २र १   २ १   २   २ ४
३४५। आसोमोवा। स्वा३रभ। सा३४३। नी३दा५।
२ १ १ १
ता२३४५इ ॥ १८ ॥ ६७

प्रतर्दनऋषिः*। "सेनानीः" सेनाना मग्रे नेता। "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्"† इच्छन् यजमानानां पश्वादिक मृच्छन् "रथानाम्" "अग्रे" पुरतः "प्रैति" प्रकर्षेण सङ्ग्राम मङ्गच्छति। "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्यभेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमानेभ्यः "इन्द्रहवान्" तैः कृतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्"। आहूतो हीन्द्रः सोमं पीत्वा

* "दैवोदासिः"—इति ऋषि-नै०।

† "छन्दसि परेच्छाया मपि क्यच् वक्तव्यः"—इति तृतीयाध्यायीय-कात्यायन-वचनादिह क्यचि रूपम्।

अथ द्वितीया।

२ ३ २ ३ १ २     २ २ ३ २ ३ २ ३ १२   २२
प्रते धारा मधुमतीरसृग्रन्वारंयत्पूतो अत्येष्यव्यम्।
१२   ३१ २ ३१ २१ २ ३२३ १२     ३१
पवमानपवसे धामगोनाञ्जनयंत्सूर्यमपिन्वो अर्कैः ॥२॥ ६८*

२२   २   २
(वैयश्वज्योतिषाणि त्रीणि ॥)     हाउहोवा३हाइ।
२ २ २     १ ७   १११११   २२   २   २
प्रते धारा मधुमा३ताइरसृग्रा२३४५न्। हाउहोवा३हाइ।
२   २२     १ ७   ११११     २२   २
वारंयत्पूतो अतौ३याइषिआव्या२३४५म्। हाउहोवा३
२     २     ३२ १ ७     ११११     २२   २
हाइ। पवमानपवसे३धामगोना२३४५म्। हाउहोवा

कामान् प्रयच्छतीति। "रभसानि" इन्द्रस्य वेगेनागमन-निमित्तानि "वस्त्रा" वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि "आ दत्ते" आ गृह्णाति † ॥ १ ॥ ६७

---

* ऋ० ७, ४, १७, १।

† अत्र विवरणं यथा—"प्रसेनानी। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गच्छन् इच्छन्। धनं पृथिव्यां भवं प्रेति प्रयाति। हर्षति अस्य सेना भद्रान् भन्दनीयानि। कुर्वन् क्षणन्। इन्द्रहवान् इन्द्रियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं गुणविशिष्टः। सोमः वस्त्राणि रभसानि पतन्ति। आदत्ते परसैन्येभ्यः। अथवा सेनानीः स्कन्दः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गच्छन्। पृथिव्यां भवम्धनम्। राति गृह्णाति ददाति सैन्येभ्यः सोमइव रश्मीन् वस्त्राणि सैन्येभ्यो ददाति॥"—इति॥

अथ तृतीया।

१ २   २क २र   ३ १र   २र   ३ १र   २र
प्रगायताभ्यर्चामदेवांत्सोमꣳहिनोतमहते धनाय।
३ १ २   ३ २   ३ २ ३ २ ३ १ २   ३ १ २ ३   १   २र
स्वादुःपवतामतिवारमव्यमासीदतुकलशन्देवइन्दुः॥२॥६९*

२   र   १   ७र   १ १ १ १   २र
इहाइ। जनयंत्सूर्यमा३पाइन्‌_वोअर्का२३४५इः। हाउ
र   २   १ १ १ १
होवा३हाउ। वा३४५॥ १९ ॥ ६८

पराशरऋषिः†। तदा प्रसृज्यन्ते "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि। किञ्च हे "पवमान" शोध्यमान सोम! "गोनां‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसनीकृत्य "पवसे" क्षरसि। ततः "जनयन्" जायमानस्त्वं "अर्कः" अर्चनीयैः स्वतेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि॥

"वारं यत्पूतोअत्येष्यव्यम्"–"वारान्यत्पूतो अत्येष्यव्यान्"—इति, "जनयन्"–"जज्ञानः"—इति च सामऋचः पाठौ॥ २॥ ६८

* ऋ० ७, ४, ११, ४।

† "शाक्त्यः"—इति ऋषि-नि०।

‡ "गोः पादान्ते (७, १, ५७)"—इति सिद्धं गोनामिति।

¶ 'गवां रश्मीना मदकानां वा'—इति वि०।

२ १र   २ १   २ ३ ४ ५   २र १
प्रगायता। अभिय। चामदेवान्। सोमꣳ-

२ १   २ ३ ४ ५   २र १   २
हिनो। ता३महे। तेधनाया। स्वादुःपवा। ता३

१   २ ३ ४ ५   २र १र   २ १   २
मति। वारमव्याम्। आसीदतु। कलशम्। दा-

२ ४
३४३इ। वा३आ५इन्दू६५६ः॥ २०॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [ पुरुष-व्यत्ययः]। किञ्च। "महते" महत् प्रभूतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [ क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी ] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अतिपवताम्" अतीत्य क्षरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठौ॥ ३॥ ६९

* 'स्तोतारश्चैव'—इति वि०।

† "तप्तनप्तनथनाश्च ( ७, १, ४५ पा० )"—इति तपि सिद्धं हिनोतेति।

अथ चतुर्थी ।

१ २ ३ १ २ ३१र २र१ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाजꣳसनिषन्नयासीत् ।
३ १ २ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
इन्द्रङ्गच्छन्नायुधासꣳशिशानोविश्वावसुहस्तयोराद-
२
धानः ॥ ४ ॥७०*

२र र २ र र र २ ३र ५र
हाउहोवा३हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
२र र २ र र २ ३र ५र
हाउहोवा३हाइ । रथोनवाजꣳसनिषा३४३नयासीत् ।
२र र २ र र २ ३र ५
हाउहोवा३हाइ । इन्द्रङ्गच्छन्नायुधासा३४३ꣳशिशानः ।
२र र २ र र २ ३र ५ ४
हाउहोवा३हाइ । विश्वावसुहस्तयोरा३४३दधानः । दधा

५नाउ । वा ॥ २१ ॥ ७०

वसिष्ठऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयो-र्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृक सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन्|| "प्रायासीत्" प्रगच्छति ।

* ऋ० ७, ३, २९, १ ।    † "मित्रावरुणः"—इति ऋषि-नै० ।

‡ 'प्रीणानः गच्छन् वा'—इति वि० ।

¶ "जनिता मन्त्रे (६,४,५३)"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिवी-नामसु चतुर्थं नैघण्टुकम् (३, ३० )।

|| 'सनिष्यन् सम्भजमानः'—इति वि० ।

अथ षष्ठी ।

साकमुक्षोमर्जयन्तस्वसारोदशधीरस्यधीतयोधनुत्रीः ।
हरिःपर्यद्रवज्जाःसूर्यस्यद्रोणंननक्षेअत्योनवाजी ॥ ६ ॥७२*

(दाशस्पत्ये द्वे ॥) साकाम् । उक्षोमर्जयन्त । स्वसा २३राः । दाशा २ । धीरस्यधीतयोधनू२३त्रीः । हारी २ः । पर्यद्रवज्जाःहरिया२३स्या । द्रोणा २म् । नन- क्षेअत्योनवा२३ । हाउवा३ । जी२३४५ ॥ २४ ॥

साकमुक्षा६ए । ए३१२३४ । मर्ज्जयन्तस्वसारः । दशधीरा६ए । ए३१२३४ । स्यधीतयोधनुत्रीः । हरिः पर्या६ए । ए३१२३४ । द्रवज्जाःसूर्यस्य । द्रोणन्नना६ए । ए३१२३४ । क्षेअत्योनवा६ । हाउवा । जी२३४५ ॥२५॥ ७२

---

* उ० ६,२,१५,१=ऋ० ७,४,३,१=जहे ८,१,७–१२,१,९–१८,२,४ ।

अथ सप्तमी ।

३ १ २　 ३ १२ ३२ ३ १ २ ३ २ ३ २ ३ १र २र
अधियद्स्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः ।
३ १ २ ३ १ २ ३ १ २　 ३ १र २र३ १ २　 ३ १ २
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म ॥ ७ ॥७३*

नोधाऋषिः†। "साकमुचः" [ उच समवाये ( दिवा० प० ) क्विपि रूपम् ] तादृश्यः "स्वसारः" कर्म्म-करणार्थ मितस्ततः सुष्ठु गच्छन्त्यः‡ अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [ मृजू शौचालङ्कारयोः ( चु० उभ० ] ताः दशसङ्ख्याकाः "धीतयः" [ अङ्गुलिनामैतत् ( नै०२,५,७ ] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः‖ "पर्य्यद्रवत्" परितो गच्छति। सूर्य्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम्। "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" कलशं "ननक्षे" व्याप्नोति [नक्षति-र्व्याप्ति-कर्मा (नै०२,१८,२) ॥ ६ ॥ ७२

---

* ऋ०९,४,४,१ ।

† "गौतमः"—इति ऋषि नै०।

‡ स्वृ शब्दोपतापयोः ( भ्वा० प० )—इत्यस्य रूपं स्वसेत्यभिप्रायः ।

¶ "स्वसारः"—इत्यङ्गुलि-नामसु नवोदशतमं नैघण्टुकम्।

§ "दायन्ति"—इति वि० ।

‖ "अपत्यम्"—इति वि० । "जाः"—इत्यपत्यनामसु नवमं नैघण्टुकम् २,२ ।

(काश्यपस्य च शोभनम् ॥) अधियदा। स्माइन्वारजि नीरवशु। भाः। स्पर्द्धन्तेधियःहु। राइनविशाः। अपोवृणानःपवताइ। कवी२३यान्। व्रजन्न। पा। शुवर्द्ध। ना३४३। याइमाधुन्माई५६ ॥ २६ ॥ ७३

कण्वऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्य्ये न यथा सूर्य्ये "विशः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यद्वा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते ॥

"सूर्य्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"—इति च साम्न ऋचः पाठः ॥ ७ ॥ ७३

* "घोरः"—इति ऋषि० नै०।

† शुभइति शुभ शोभायाम् (भ्वा०आ०)—इत्यस्य रूपम्। विसर्गस्तु न दृश्यते मूले।

अथाष्टमी।

१ १ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ ३ १ २
इन्दुर्वाजीपवतेगोन्योघाइन्द्रे सोमःसहइन्वन्मदाय।

३ २ ३ १ २ ३ १र २र ३
हन्तिरक्षोबाधतेपर्यरातिं

१ २ ३ २ ३ १ २ ३ १ २
व*रिवस्कृ†एवन्वृजनस्यराजा॥ ८॥ ७४‡

२ १ १ २र
(दाशस्पत्यानि चत्वारि॥) इन्दूर्वाजी २। पवतेगो-

२ १ ५ १ २
नियोघाः। इन्द्राइसोर२३४माः। साहइन्वन्मदाया।

१ ५ १र र ३ १ २
हन्ताइरा२३४क्षाः। बाधतेपर्यरातिम्। वराइवा२३४स्कृ।

२ १ १ ऽ २ २ ५ ४
एवन्वृजाना२३स्या। रा३जौवाओ२३४वा। हो५इ।

डा॥ २७॥

४ ५ र ४र ५ र ४र ५ १ ७ २
इन्दुर्वाजीपवतौ। हौहोवाहाइ। गोनियौघौ।

३ ५ १ ऽर १र ऽर १ २ १ २
वाओ२३४वा। इन्द्र२सोमा२ःसहइ। न्वान्मदायौ। वा-

३ ५ १ २ १ २र १र २र १ ७ २ ३
ओ२३४वा। हन्तिरक्षोबाधते। पार्यरातौ। वाओ-

---

* "अरातीर्व"—इति, † "वरिवःकृ"—इति च क०।

‡ उ०३,२,२०,१ = ऋ०७,४,१२,५ = ऊहे ३,२,१५—८,२,५।

५ १ २ १ २ १ ५ २
२३४वा। वरिवस्कृण्वन्न्जना३। स्या। रा३जौवा-
५ ४
ओ२३४वा। हो५इ। डा ॥ २८ ॥

५ २र र र ४ ५ २र
इन्दुरौहोवाहाईयावाजाउ। वा३। हाउवा।
२र १ २ २ १ २
पवतेगोनियोवाउ। वा३। हाउवा। इन्द्राइसोमः।
१ २ २ १ ३ ५र र
सहइन्वाउ। वा३। हाउवा३। मा२दार३४औहोवा।
३ १ १ १ १ २ १ १ र १ २
या२४५। हन्ताइरहो। बाधाताइपाउ। वा३।
२ १ ३ ५र र ३ १ १ १ १ २ ३
हाउवा३। या२रार३४औहोवा। ती२३४५म्। वरा-
२ १ २ २ १
इवस्कृ। ण्वन्न्जनाउ। वा३। हाउवा३। स्या२-
३ ५र र ३ १ ५ १ १
रा२३४औहोवा। जा२३४५ ॥ २९ ॥

५ र र र र ४ ५ ए र
इन्दुर्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-
४ ५ २र र र ४ ५
दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्न्ज-

४ ५　　३र २　　५र र　　२　　२ १र ३ १ १ १ २

नस्यराजा । राजा३४औहोवा । ए३ । स्यराजार३४५

॥ ३० ॥ ७४

॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः । "इन्दुः" चरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-नीचीनाग्र-रससङ्घातः† "इन्द्रे" "सत्त्वः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" चरति । किञ्च । "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति । किञ्च । "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति । कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः‖ सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (नै० १,१२,८३) "उन्देरिच्चादेः—(उ,१)"—इत्युक्तेरिन्दुरिति ।

† गो—गमनशीलः, नी—नीचिनः, (तस्य अग्रे विद्यमानः) ओघः—रससङ्घातः। "गोनी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाजहार च पस्पशे पतञ्जलिः ।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशतं नैघण्टुकम् २,१४ ।

¶ भाष्यकारस्त्वत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति ।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९ ।

‖ "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१ ।

अथ नवमी।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमाꣳश्चत्वइन्दोसरसिप्रधन्व।
३२ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूति
२ ३ १ २ ३ १ २ ३ १ २
म्पुरुमेधाश्चि*त्तकवेनरन्धात् ॥ ९ ॥ ७५ †

५र ४ ५ ४ ५
(श्रीष्ठानि त्रीणि ॥) औहोवाइ। अयोवाइ।
१र २र २ १ २ ५ २ ३ २ ५ २
पवापवस्वैनावसू२३नी। औ३होइ। इहा। ई३या।
२ १ २ २ १ २ ५ २ ३ २
माꣳश्चत्वइन्दोसरसिप्रधार२३न्वा। औरहोइ। इहा।
५ २ १ २र २ १ २ ५ २ ३ २
ई३या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्। औ३होइ। इहा।
५ २ १र २ २ २ १ २ ५ २
ई३या। पुरुमेधाश्चित्तकवेनरार२३न्धात्। औ३होइ।
१ २ ५ ३ ५र २ २ २र ३ १
इहा। ई२। या२३४। औहोवा। ए३। दीदिहो१॥
॥ १ ॥

५ ४ ५ ४ ५ १ २ २ २ १ २ २
अयोवाइ। पवोवाइ। पवस्वैनावसू२३नी। इहो

* "पुरुमेधश्चि"—इति ऋ०।
† उ० ४, १, २१, १ = ऋ० ७, ४, २१, २ = ऊहे २, २, १७—८, २, १०—१३, २, १।

५ २ र १ र २१ २
इया३। ई३या। मा॒ऽ॒श्वत्वइन्दोसरसिप्रधा२३न्वा। इ

र ५ २ १ रर२१ २
होइया३। ई३या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्।

र ५ २ १रर र२१ २
इहोइया३। ई३या। पुरुमेधाश्चित्तकवेनरा२३न्धात्।

र १ २ ५र र २ २र
इहोइया३। ई२। या२३४। औहोवा। ए३। द्दी

१ ११११
दया२३४५त्॥ २॥

२ ३ ५ २ १ ५ २ १र
हाओ२३४वा। २। हा३ओ२३४वा। हाउवा। अया-

२१र२ र१र २र १२ १ १२ १२
पवापवस्वैनावसूनि। इहइ। हिया२। इहा। इहा।

र १ २र१ २१२ १२ १ १२
मा॒ऽ॒श्वत्वइन्दोसरसिप्रधन्व। इहइ। हियार। इहा।

१२ १२ १ २ १र२र १ २र१ २ १
इहा। ब्रध्नश्चिद्यस्यवातोनजूतिम्। इहइ। हिया२।

१२ १२ २३ ५ २ १ ५
इहा। इहा३। हाओ२३४वा। २। हा३ओ२३४वा।

२ १र२र १ २र१ २र १२ १
हाउवा। पुरुमेधाश्चित्तकवेनरन्धात्। इहइ। हिया

१ २ २३ ११११
२। इहा। इहा२३४५॥ ३॥ ७५

कुत्सऋषिः*। हे सोम! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" क्षर [पवा—पूञ् पवने (क्या० उ०) "अन्येभ्योऽपि दृश्यन्ते (३,२,१०१)"—इति विन् प्रत्ययः। आर्धधातुकलक्षणो गुणः। "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्]। तथा हे "इन्दो"! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्याख्ये कलशे "प्रधन्व" प्रगच्छ‡। ततः "यस्य" यं "ब्रध्नश्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन्। किञ्च। "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [तकतिर्गतिकर्मसु पठितः॥। अस्मादौणादिक उन् प्रत्ययः यस्येति (२,३,३७) कर्मणि षष्ठी॥ "न लोकाव्ययेति (२,३,६९) षष्ठी-प्रतिषेधश्छान्दसः] सोम मभि गच्छता मित्यर्थः॥

"यस्य"-"यच"—इति, "जूतिं"—"जूतः"-इति,—"नरन्धात्"-"नरन्दात्"—इति च साम्न ऋचः क्रमेण पाठाः॥ ८॥ ७५

---

* "आङ्गिरसः"—इति ऋषि-नै०।

† "सरः"—इत्युदकनामसु एकत्रिंशत्तमम् नै० १,१२।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्ठितमन्नैघण्टुकम् २,१४।

¶ 'ब्रध्नः ब्रह्म, सविता वा महान् वा'—इति वि०।

§ जवतेर्वेगकर्मण ऊतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति।

॥ नि० नै० २,१४,६८।

अथ दशमी।

३ १र    २र    ३ १ २ २ ३ १र    २र    ३ २
महत्तत्सोमोमहिषश्चकारापांयद्गर्भोवृणीतदेवान्।
१ २ ३ २ ३ १ २ ३ १र
अदधादिन्द्रे पवमानओजो
२र ३ २ ३ २ ३ १ २
जनयत्सूर्येज्योतिरिन्दुः॥ १० ॥ ७६ *

२ र र १ र
(आत्रम्॥) महत्तत्सोमोमहिषश्चा३कारा२। अपां
र र १ र र र १
यद्गर्भोवृणीता३दाइवा२न्। अदधादिन्द्रे पवमाना३ओ
र ऽर १ २ २
जा२ः। अजनयत्सूर्यें३ज्यो२३। तिरिन्द्राउवा३। ए३।
१ २ १र २र १र २ १ १ १ १ १
अजनयत्सूर्येज्योतिरि। दू२३४५ः॥ ४ ॥ ७६

"पराशरऋषिः*"। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत्। किं तत्?

* उ० ५,२,१,३ = ऋ० ७,४,१९,१ = ऊहे १०,२,३—२२,२,५—२२,२,८—२२, २,९ = उह्ये ६, २,५।

† "प्राक्तः"—इति ऋषि-नै०।

‡ अत्राह यास्कः—'महत्तत्सोमोमहिषश्चकारापां यद्गर्भोऽवृणीत देवानाधिपत्य मदधादिन्द्रे पवमान ओजो ऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा'—इति नि०प०२,१७।

¶ 'महत् असम्भाव्यम्'—इति वि०।

अथैकादशी।

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
असर्जिवक्कारथ्येयथाजौधियामनोताप्रथमामनीषा।

३ १ २ ३ २ ३ २ ३
दशस्वसारोअधिसानो

१ २ ३ २ ३ २ ३ १ २ ३ १ २
अव्येम्त्जन्ति*वह्निᳪसदनेष्वच्छ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् कृतवानिति। किञ्च। "पवमानः" पूयमानः‖ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः× "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡॥ १० ॥ ७६

* "अव्येअञ्जन्ति"—इति ऋ०।

† ऋ० ७,४,१,१ = आरण्ये १,२,२२।

‡ 'अपां यद् गर्भदर्शनमात्र' पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

‖ 'पूयमानः विषयप्रमाणेन'—इति वि०।

+ 'ओजः बल मणिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्दुरादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरणशीले'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथाचोक्तः—येन सूर्यस्तपति'—इति वि०।

२ १ २ २ १ १
(वासिष्ठम् ॥) असाऔ३हो । जिवाका२। रथ्या

२ ५र ३ १११११ २ १ २ २ १
इया३४। था। जार२३४५उ। धियाऔ३हो। मनो-

१ २ ५र ३११११ २ १ २ २
ता२। प्रथमामा३४। नो। षा२३४५। दशाऔ३हो।

१ १ २ ५ ३ ११११ १ १
स्वसारा२ः। अधिसानो३४। अ। व्या२३४५इ। मृजा

२ २ १ १ २ ५
औ३हो। तिवाक्री२म्। सदनाइषू३४। अच्छा२उ।

१११
वा३४५ ॥ ५ ॥ ७७

कश्यपऋषिः*। "वक्वा" शब्दायमानः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्मार्थं ऋत्विजइति आजिर्यज्ञः तस्मिन् "धिया" कर्म्मणा स्तोत्रेण वा† साकम् "असर्जि" पात्रेषु सृज्यते‡। तत्र दृष्टान्तः। "रथ्ये यथा" रथे रथार्हे [आजौ सङ्ग्रामनामैतत्¶। अजन्ति प्रक्षिपन्त्या युधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत्। कीदृशः? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनाꣳसि प्रोतानि"—इति] "प्रथमा"

---

* "मारीचः"—इति ऋषि-नै०।

† 'धिया प्रज्ञया कर्म्मणा वा'—इति वि०।

‡ 'सृष्टवान्'—इति वि०।

¶ नि० नै० २,१७,८।

अथ द्वादशी।

३२ ३२३२ ३१२ ३ १२३१२ ३२३१२
अपामिवेदूर्मयस्तर्तुराणाःप्रमनीषाईरतेसोममच्छ।
३ २३ १ २३२ ३१र
नमस्यन्तीरुपचयन्तिसञ्चा
२र ३२३१२
चविशन्त्युशतीरुशन्तम्॥ १२ ॥ ७८*

॥ पञ्चमदशति ॥ ॥ अर्द्धः प्रपाठकः ॥

५ ४र ५ ४र५र ४ ५ ४र
( अपाञ्च साम ॥ ) अपामिवेदूर्मयस्तौ। होवा।
५ २२३ ३र २ १ २र १ २र
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पात्राण्यभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानौ" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविभवे अविवालेन कृते पवित्रे "अञ्जन्ति" प्रेरयन्ति‡॥

"प्रथमा मनीषा"--"प्रथमो मनीषी"—इति, "सदनेषु"--"सदनानि"—इति च साम्न ऋचः पाठः॥ ११ ॥ ७७

---

* ऋ० ७,४,५,२।

† "स्वसारः"—इति अङ्गुलिनामसु अष्टमं नैघण्टुकम् २,५।

‡ "अञ्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवात्रावलम्बितं सायणेन। सामवेदीयपाठस्तु "ऋजन्ति"—इति ; अतएव 'ऋजन्ति प्रसाधयन्ति'-इति वि०।

२ ३५ २ ३र २ १
तेऽ। सोमम। च्छा३४। हाहोइ। नमस्य। ताइः।
२ २ ३५ २ ३र २ १ २
उपचा३। यन्तिसम्। चा३४। हाहोइ। आचवि।
१ २ ३ २ ३५ २ ३र २ ५र
शा। तियुश। तीरुश। ता३४म्। हाहा३४। औ
र २ १ ११११
होवा। वा३हा२३४५ः॥ ६ ॥ ७८

प्रस्कण्वऋषिः*। "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते। "इव"—इति पूरणः। तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः। [तुर त्वरणे जौहोत्यादिकः (आ०)। यङ्लुगन्तस्य शानचि रूपम्। अभ्यासस्य उवर्णस्य रेफादेश-श्छान्दसः। अभ्यस्तस्वरः†। तादृशा ऋत्विजः "मनीषाः" मनस ईशित्रीः स्तुतीः "सोममच्छ" सोमं प्रति प्रेरयन्ति। "नम-स्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च। उप समीपे गच्छन्ति। तमेव "संयन्ति च" सङ्गच्छन्ते। "[च वा योगे प्रथमा (८,१,५९)—इति न निघातः] "उशतीः" काम-यमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च।' १२ ॥ ७८

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः॥

॥ इति त्रैष्टुभम्॥

---

* "काण्वः"—इति ऋषि-नै०।

† "अभ्यस्तानामादिः (६,१,१८९)"—इति पा०।

पुरोजितीति-मुख्यास्तु नवर्चो बृहतीत्यसौ—
"आहर्य्यतायधृष्णवे" शिष्टा अनुष्टुभः स्मृताः* ॥
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे † ॥

तत्राष्टमे खण्डे—

सैषा प्रथमा।

३ १ ३ ३ १ २ ३ १ २ ३ १ २
पुरोजितीवोअन्धसःसुतायमादयित्नवे।
३ १ २ ३ १ २ ३क २र
अपश्वानᳬश्नथिष्टनसखायोदीर्घजिह्वम् ॥ १ ॥ ७९

५ र २ २ ५ २
(प्रक्लौ द्वौ ॥) पुरोजिती। वाअन्धा२३४साः। सु-
१र २ ५ १
तायामाऽरदया३१उवाये३। त्ना२३४वे। अपश्वाना२ᳬ

* पुरोजितीतिमुख्याः 'पुरोजितीवोअन्धसः'–इतिप्रभृतयः नव ऋचः, अत्राष्टमे-खण्डे श्रूयन्त इति शेषः। तत्र आहर्यतायेति सप्तमी ऋक् बृहतीच्छन्दस्का, शिष्टाः अष्टौ अनुष्टुप्छन्दस्का इत्यर्थः।

† 'विनियोगस्त्वासां ज्योतिष्टोमे'—इति वि०।

‡ उ० १,१,१८,१ = ऋ०७,५,१,१ = आरण्ये १,२,२२ = ऊहे१,१,११—१,१,१२—२,२,१८—३,१,१३—४,१,१४—६,२,९—७,२,१०—८,२,१५—८,२,१६—८, २,१७—१०,१,३—१०,१,१७—१२,१,६—१२,२,११—१२,२,१२—१२,२,१३—१२,२,१४—१३,१,६—१३,२,६—१६,१,२—१६,१,८—१६,१,९—१६,२,६—१७,१,३—१७,१,४—१७,१,१७—२०,१,१८—२०,२,१२—२०,२,१३—(२१,२,१;)—२१,३,२—२२,१,६—२२,१,७—२२,१,९—२२,२,१३—२२,२,१५—२३,१,९ = ऊह्ये ३,१,१—२,१,१८—२,२,२—२,२,५—२,१,१—३,१,१९—३,२,२—४,१,८—४,२,५—४,२,८—४,२,१४—४,२,१६—(५,१,८—५,१,१२)—५,२,१४—६,१,१२।

२　　　　५　१ र
अथा३१उवाये३। ष्ठार२३४ना। सखायोदी ऽ२र्घजा३१

२　　५
वाये३। क्षीर२३४याम्॥ ७॥

५ र　　२ १ २ २　१ २र
पुरोजिती। वो३ओन्धा३साः। स्वनायमा२। ऊ२।

१ २ २　१ २र
हा२इ। ओ ऽ२। दा३याइत्ना३वे। आपस्वाना२म्।

१　　१ २ २　१ २र
ऊ२। हा२इ। ऊ ऽ२। आ३थाइष्टा३ता। साखा

र　　　१　१ ३
योदा२इ। ऊ२। हा२इ। ऊ२३। घा२जा२३४

५र र　१　१ १११
औहोवा। ए३। क्रिया२३४५म्॥ ८॥

५र र　३　५　२र
(कार्त्तयशम्॥) पुरोहाहाउ। जा२३४इती। वो

१ २ २　४ ५　२ १ २ १　४ ५
आऔ३हो३। धासाः। सुताऔ३हो३। यामा६।

५　२ १ऽर　१२　१ र　२ २
हाउवा। दयित्नवे२। उपा। अपस्वान९अथा१इष्टा

२　१ २ २　४ ५　५　२
३ना। सखाऔ३हो३। योदा६। हाउवा। घजि

१　२ १११
क्रियम्। उपा२३४५॥ ९॥

५४र ५ र ४५ ४
(औद्वं सद्मनम् ॥) पुरोजितीवोअन्धसः । ओवा-
५ २ र र १ र
हाइ । सुतायमादयित्नवओवा२३होइ । अपश्वानꣳ
१ २र र १ २ ३
अथिष्टनओवा२३होइ । साखायोदाइ । घाजिक्का२३
२ २ १र २ १ र ऽ ३ २
४५या६५६म् । सुवृक्तिभिर्नृमादनम्भरे२णुवा१ ॥ १० ॥

३ २ २ ४ र ५ २
(श्यावाश्वम् ॥) पुरो३१ । जी३ती । वोअ । धा
४ ५ १ र र २ १
३सः । एहिया । सू । तायमादा । यि । त्नवा२इ ।
१र १र २ ४ ५ २र
एहिया२ । अपश्वानꣳआ३थी३ । ष्टा२३४ना । ऐहा
१र र १र २ ४ २
२इ । एहिया२ । सखायोदाइघा३जी३ । क्का३४५ये ।
५
६हाइ ॥ ११ ॥

५ र र ५ २ १र
(आन्धीगवम् ॥) पुरोजितीवो४अन्धासाः । सुताय ।
र २ १ १ र र २
मादा२३या । ऊम्मा२१ऽ२ । त्नवेअपश्वानꣳअथिष्टन ।
१ २ २ १ २ १
साखा३उवा । यो२दी । घा२३जी । क्कियाम् । औ
४ ५ ४
२३होवा । हा५इ । डा ॥ १२ ॥ ७९

अथ द्वितीया ।

३ २ २ २ ३ २उ ३ १ २ ३ १ २
अयम्पूषारयिर्भगःसोमःपुनानोअर्षति ।

३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ २ ॥ ८०*

श्यावाश्वऋषिः† । हे "सखायः" सखिभूताः समानख्याना वा हे स्तोतारः! "वः" यूयं "पुरोजिती" [षष्ठ्याः पूर्वसवर्णदीर्घः‡] पुरः-स्थित-जयस्य "अन्धसः" अदनीयस्य सोमस्य स्वभूताय "सुताय" अभिषुताय "मादयित्नवे" अत्यन्तं मदकाराय रसाय "दीर्घजिह्व्य" [ दीर्घा जिह्वा अस्य स दीर्घजिह्वी "दीर्घजिह्वी च छन्दसि (४,१,६९)—इति "ङीषन्तत्वेन" निपातितः। तादृशं] "श्वानं" च "अपश्नथिष्टन" अपश्नथयत¶ अपबाधध्वम् । यथा श्वा राक्षसा वा "सुतं" सोमं न लिहन्ति तथा कुरुतेत्यर्थः ॥ १ ॥ ७९

* उ० २,१,१६,१ = ऋ० ७,५,२,१=आरण्ये १,२,८—२,२,१७—२,२,१८—२,२,१९ ऊहे१,२,८—२,२,९— ७,१,९—११,२,१०—११,२,२०—१३,१,२—१५,१,१३—१५,१, १४—१५,१,१७—२०,१,५—२०,२,१८—२२,२,९=ऊह्ये२,१,६—२,१,८—३,१,११—३, २,११—५,२,९—६,१,८ ।

† 'आन्धीगुः श्यावाश्विः'—इति ऋषि-नि० ।

‡ सुपांसुलुगित्यादिना (७,१,३९) ।

¶ 'शिथिलीकरोतु'—इति वि० ।

( क्रौञ्चानि त्रीणि ॥) अयम्पूषौहो। रायिर्भगाः। सोमःपुनाइ। नोआर्षापूनाई६५६इ। पतिर्विश्वौहो। स्याभूमनाः। वियख्यद्रोइ। दासीइजउभाई६५६इ ॥ १३ ॥

अयम्पूषा। अयम्पूषा। रयिर्भगाः। सोमःपूना२। नोअर्षताइ। पतिर्वाइश्वा२। ओस्याभू१माना२ः। ओइवियख्या२३द्रो। दासीउभ। इडा२३भा३४३। ओ२३४५इ। डा ॥ १४ ॥

अयम्पूषा। हौ। रयिर्भगाई६ए। सोमा२ःपुना२। नआ३४५। षा२३४ती। पतिर्विश्वस्यभूमनः। वियख्या२३द्रो। दसीजर३भा३४३इ। ओ२३४५इ। डा ॥ ॥ १५ ॥ ८०

अथ तृतीया ।

२ २ ३ १ २   ३ २ ३ १ २   ३ १ २
सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।

३ १ २   ३ १ २   ३ १ २
पवित्रवन्तोअक्षरन्देवान् गच्छन्तुवोमदाः ॥ ३ ॥ ८१*

५ र र   २   २   १र
(त्वाष्ट्रीसाम ॥) सुतासोमा । धुमाश्त्तमाः । सो-

२ २   २   २ ३ २   १ २ २
माइन्द्राश्यमा२ । ए३ । दिनश्चा । पवाइत्रवाश्न्तो

ययातिर्नाहुषऋषिः[†] । "पूषा" पोषकः सर्वेषाम्[‡] । "भगः" भजनीयः[¶] "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशमभिगच्छति । तथा "विश्वस्य" सर्वस्य "भूम्नः" भूतजातस्य "पतिः" पालयिता[§] "सोमः" "उभे" "रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्व-तेजसा प्रकाशयति । अनेन लोकद्वयपतित्वं सूचितम्[‖] ॥ २ ॥ ८०

---

* उ० २,२,१५,१= ऋ०७,५,१,४=ऊहे २,२,३—२,२,३—२,२,४—७,१,२०—१५,२,२—१६,१,२—२०,१,१२ —२७,१,१३—२२,२,११=ऊह्ये २,१,१०—४,१,७— ५,२,११—५,२,१२ —६,१,१०—६,१,१५—६,२,२ ।

† 'नाहुषो मानवः'—इति ऋषि-नै० ।

‡ 'पूषा पुष्यातेः । सोमः । अथवा पूषा आदित्यः'—इति वि० ।

¶ 'भगः सएव सोमः शोभनः'—इति वि० ।

§ 'आदित्यात्मना'—इति वि० ।

‖ 'विनियोगोऽस्य द्वितीयेऽहनि'—इति वि० ।

२ २३२ १ २ २ २ २१र
३। ए३। ष्टरन्ना। दाइवान्गच्छा३न्तुवा२ः। ए३। मदा-
२
आ॥ १६॥

५ ४र ५र ४ ५ ४ १
(ऊर्ध्वंइलान्ध्री॥) सुतासोमधुमत्तमाः। सोमा२
१ ३२ २ ५ २१ २र
इन्द्रा२। यमा३४५। दी२३४नाः। पवित्रवन्तोअक्ष-
३र र २१ २१र २ १
रन्। देवान्गच्छा। तुवोमा२३दा३४३ः। ओ२३४५
इ। डा॥ १७॥

५ ४र ५र ४ ५ र ४र ५
(वासिष्ठम्॥) सुतासोमधुमत्तमाः। सोमाइन्द्रा।
२ १ ७ १र २ १ र
यमन्दिनः। पावित्रावा२। तोअक्षरन्। दाइवान्
२ २ ५ २१ २ ४५ ४
गच्छौवा। तू२३४वाः। मदा। औ२होवा। होप्र्इ।
डा॥ १८॥

५ ४र ५र ४ ५ र ४र
(आष्कारणिधनं त्वाष्ट्री॥) सुतासोमधुमत्तमाः। सो
५ २५र १ ७ २२ १ ७
माहाउ। इन्द्रा३यामन्दिना२ः। इन्द्रा२हो। यमा२

दा२३४इनाः। पवित्रवा३न्तोअक्षारा२न्। क्षवा३हो।
तो२क्षा२३४रान्। देवान्गच्छा३न्तूवो१मादा२ः। देवा
३न्होइ। गच्छो२३४हा। तू२वा२३४औहोवा। मदा-
३आ२३४५॥ १९॥

(वासिष्ठम्॥) सुतासोमधुमत्तमा६ए। सोमाइ
न्द्रा३यामन्दिना२ः। दाइना२ः। पवित्रवा३न्तोअक्षा-
रा२न्। क्षारा२न्। देवान्गच्छा३न्तूवो१मादा२ः।
मादा२ः। देवा३न्होइ। गच्छा२३४हा। तू२वा२३४औ
होवा। मदा३ई२३४५॥ २०॥

(क्षारत्वाष्ट्री॥) सुतासोमा३हा। धुमत्तामा२ः।
सोमाइन्द्रा३हा। यमन्दाइना२ः। पवित्रवा३हा। ता-
अक्षारा२न्। देवान्गच्छा३हा। तुवो३हो२३४। वा।
मा५दोई६हाइ॥ २१॥

५ र २र २ २ २
(हिरण्यस्तूपत्वाष्ट्री ॥) सुता। सोमा३। हा३वो।
३ १ ३ र ५र ३ १ २ २ ३ १
धुमत्तामा२३४ः। सोमाः। इन्द्रा३। हा३हा। यम
१ ५ ३ २ १ १ ३र २ १
न्दाइना२३४ः। पवि। त्रवा३। हा३हा। तोऽश्चा
र ५र ३ २ २ २ ३ २ १
रा२३४न्। देवान्। गच्छा३। हा३हा। तुवो२हो२
५ ४ ५
३४। वा। मापुदो६हाइ ॥ २२ ॥

५ र २ ४ ५ ४ ५ २र १र
(वासिष्ठम्॥) सुतासो३माधुमत्तमाः। सोमा
२ १ २ १ २ ३ ५ २ र
इन्द्रा। यमन्दिनः। पावोऽश्रो२३४वा। त्रवन्त ाऽश्चरन्।
३र र २ १ २१र २ १
देवान् गच्छ। तुवोमा२३दा२३४३ः। श्रो२३४५इ। डा॥
॥२३॥ ८१

ययातिर्नाहुषऋषिः*। "मधुमत्तमाः" अतिशयेन माधुर्योपेताः अतएव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः"† पवित्रे वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "चरन्" पात्रेषु चरन्ति। अथ प्रत्यक्षस्तुतिः। "वः" युष्माकं

* 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

† 'दशापवित्राख्याः'—इति वि०।

अथ चतुर्थी ।

१ २　　२ १ २ ३ १ २　　३ १ २
सोमाःपवन्तइन्दवोऽस्मभ्यङ्गातुवित्तमाः ।
३ २　३　१ २ ३ १ २ ३क २र　३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ ४ ॥ ८२*

(कौञ्चे द्वे ॥) हाउसोमाः। पवाइन्ताइन्दावाउ।
वाइ। हाउवा। अस्मभ्यङ्गातूवित्तामाउ। वाइ। हा
उवा। मित्राः स्वानाआरे१पासाउ। वाइ। हाउवा
३४। सुवा। धियाइः। हूरइवाइः। वा३४५इदोई हा
इ ॥ २४ ॥

सोमाः पवन्तइन्दवाः। अस्माभ्यङ्गा। तुवित्तमाः।
माइत्राओ२३४वा। स्वानाअरेपसः। सुवाधियाः। सुव
र्वा२३इदा३४३ः। ओ२३४५इ। डा ॥ २५ ॥ ८२

"मदाः" मद--हेतवो रसाः "देवान्" इन्द्रादीन्† "गच्छन्तु" ॥
॥ ३ ॥ ८१

* उ० ४,१,२०,१—ऋ० ७,५,२,५ = ऊहे ३,२,१३—३,२,१४—३,२,१५—३,२,१६—१५,२,१६—१५,२,१७—१५,२,१८—१६,१,१—२३,१,१४ = ऊह्य ६,१,२०।

† 'वस्वादीन्'—इति वि०।

अथ पञ्चमी।

३ १ २ ३ १ २ ३ १ २ ३ १ २
अभीनोवाजसातमꣳरयिमर्षशतस्पृहम्।
१ २ ३ १ २ ३ १ २३ १ २
इन्दोसहस्रभर्णसन्तुविद्युम्नंविभासहम्॥ ५॥ ८३*

५ र र १ २ २
(सोमसामानि त्रीणि॥) अभीनोवा। जा२सा२३
५र र १ ५ २ १ २ १ २ १ र
४औहोवा। ता२३४माम्। रयिमरिशतस्पृहम्। इन्दो

मनुः सांवरणऋषिः। "गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः[†] "इन्दवः" दीप्ताः[‡] सोमाः "पवन्ते" अस्मभ्य मदर्थं "चरन्ति" आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः "स्वानाः" अभिषूयमाणाः "अरेपसः" पापरहिताः अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ४॥ ८२

---

* उ० ५,१,१६,१ = ऋ० ७,४,२३,१ = ऊहे ५,१,३—५,१,४—५,१,५ — ५,१,६—५,१,७—५,१,८—१२,१,१५—१२,१,१६—१७,१,१२—१७,१,१३—१७,१,१४—१७,१,१६—१८,१,१०—१९,१,२—१९,१,९।

† "गातुः"—इति पृथिवी-नामसु विंशतितमं नैघण्टुकम् १,१। किञ्च निरुक्त-चतुर्थे—'गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति च यास्कः।

‡ 'ज्योतिरिन्दुः'—इत्यादि नि० नै० म० ९,१७।

१ ७ १ १ २
सहस्रभा२३हो । णसा२म् । तुविद्युम्न विभा२३होये

२ ३
३ । सहमो२३४५इ । डा ॥ २६ ॥

५र र १ र २ १ र
अभीनोवा । जासातमम् । रयिम । घाउवा२३ ।

१ २ २ १२ १ ५र १
होवा३हाइ । शतस्पृहम् । इन्दा२स । हाउवा२३ ।

१२ २ १ २ १ ३ ५र र
होवा३हा । स्वभर्णसम् । तुवायि३ । द्यू२म्ना२३४औहो

२र १ ३ ११११
वा । विभासहा२३४५म् ॥ २७ ॥

२ १ २र र ४ २ ३ ५
अभी२होइ । नोवाजा३सा३ । हाता२३४माम् ।

२ १ २ ४ २ ३ ५ २
रयी२होइ । अर्षशा३ता३ । हास्पृ२३४हाम् । इ

१ २ ४ २ ३ ५ २
न्दो२होइ । सहस्रा३भा३ । हार्णा२३४साम् । तुवा

१ २ ४ २ ४
२होइ । द्युम्न वी३भा३ । हा३सा५हा६५६म् ॥ २८ ॥

२ १ २ ५र ३ २
(क्रौञ्चम् ॥) अभीनोवा३१२३४ । जसा । तमा३

२ १ २ ५ ३ २ २ १
म् । रयिमर्षा३१२२४ । शत । स्पृहा३म् । इन्दो

२ ५ ३ २ २ १ २
साहा३१२३४। स्रभ। णसा३म्। तुवाइ द्यूम्ना३१२३

४
म्। विभा५सहाउ। वा॥ २९॥

४ र र र र ४
(सोमसाम॥) अभीनोवौहो५जसातमाम्। रयि

र ४ र र ४
मर्षौहो५शतस्पृहाम्। इन्दोसहौहो५स्रभर्णसाम्।

र र ४ ५ ४ ५
तुविद्युम्नौहो५विभासहाम्। सहम्। तुविद्युम्नं विभाई।

५ २ ११११ १
हाउवा। सहा३मे२३४५॥ ३०॥ ८३

अम्बरीषऋजिश्वानौ* द्रष्टारौ। हे "इन्दो" दीप्यमान सोम! "वाजसातमम्" अत्यन्तं बलप्रदं मन्नप्रदं वा धनं पुत्रं "नः" अस्माकम् "अभ्यर्ष" अभिगमय†। कीदृशम्? "शतस्पृहं" बहुभिः स्पृहणीयम्। "सहस्रभर्णसं" बहुविधभरणम् अनेक-पोषण-युक्त मित्यर्थः। "तुविद्युम्नं" [द्युम्नं द्योततेर्यशो वान्नं वेति‡ यास्कः] बह्वन्नं बहुयशोयुक्तं वा। "विभासहं"¶ महतः प्रकाशस्याभिभवितारम् अतितेजस्विन मित्यर्थः॥

---

* "अम्बरीषः वार्षागिरः"—"ऋजिश्वा भारद्वाजः"—इति ऋषि-नै०।

† अर्षेति ऋषतेर्गति-कर्मणो रूपम् (२,१४)।

‡ "द्युम्नं द्योततेर्यशो वान्नं वा "अस्मे द्युम्न मधि रत्नञ्च धेहि" अस्मासु द्युम्नं च रत्नं च धेहि"—इति निरु० नै० ५, ५।

¶ "विभासहः" शब्दोऽसौ एकत्रात्रैव श्रूयते त्रिवेद-संहितास्विति ध्येयम्।

अथ षष्ठी।

३ १ २　३१२ ३१र २र ३ १ २
अभीनवन्ते अदुहः प्रियमिन्द्रस्य काम्यम्।
३ २उ ३१र २र ३ १ २　३ १ २
वत्सन्न पूर्व आयुनि जातꣳ रिहन्ति मातरः॥ ६॥ ८४

३ ५ १
(आङ्गिरसानि त्रीणि॥) आ२३४भी। ओइ नवन्त
२ १ २ १
आइ१हा२ः। ओइ प्रियमिन्द्रस्य कामा१या२म्। ओइ
र २ १ र २
वत्सन्न पूर्व आयू१नी२। ओइ। जातꣳ रिहन्तिमो१२३
५ ४ ५
४। वा। ताधूरीईहाइ॥ २१॥

५ र ३ २ ४ २
अभी। नवी३२। तआ५दुहाः। प्रियामिन्द्रा३।
१ २ ३ ५ २ १ २ ३ ५
स्याकामा२३४याम्। वत्सन्नपू३। र्वाआयू२३४नी।
१र २ १ २ १ २१र २ १
जाता३ꣳहाइ। रिहा३हो। तिमाता२३रा३४३ः। ओ
२३४५इ। डा॥ २२॥

"मतस्पृहं"-"पुरुस्पृहम्"—इति, "विभासहं"--"विश्वासहम्"
—इति च साम्न ऋचः पाठः॥ ५॥ ८३

* ऋ० ७,४,२७,१ = आरण्ये १,२,२४—३,१,३—३,१,४—४,१,११।

४ ५ २र ५ ४ ५ ४ १ २ १
आहर्यतायधृष्णवआ। * धनूष्टा१न्वा२। तिपौ९
२ १ र २ १ ७ २ १ ३
सा१या२म्। मुक्राविय। ताअसुरा३। यानीरर्णा२३४
५ १ २ १ ४
इजाइ। विपामा१ग्रा२इ। ओइ। मा२३ही३।
२ ५
यू३४५वो६हाइ ॥ ३६ ॥

३ ५ ३ ५ २ ४ ५ २
आ४हर्य। ता४यधृ। ष्णा३वोधनुष्टन्वा। तिंपौ
३ २ १ र २ १ ७ २ ३ २
९सियाम्। मुक्राविय। ताअसुरा। यनाउवा३।
५ १ २ २ १ २ २ १र
णौ२३४जे। वाइपा२९हाइ। आग्रे२हाई। महीयू
२ १
२३वा३४३:। ओ२३४५इ। डा ॥ ३७ ॥ ८५

"हर्य्यताय"* सर्वैः स्पृहणीयाय "धृष्णवे" शत्रूणां धर्षणशीलाय सोमाय "पौंस्यं" पुंस्त्वस्याभिव्यञ्जकं वरं "धनुरातन्वन्ति" धनूषि ज्यां कुर्वन्तीति सोमस्य धारा-विसर्गार्थं वितायमानं पवित्र मभिधीयते। तदेव विवृणोति—"विपां" मेधाविनां "अग्रे"† पुरस्तात् "महीयुवः"‡ पूजाकामा अध्वर्यवः

* 'आहर्यतिः प्रेप्साकर्मा'—इति वि०।

† 'अग्रे प्रथमे'—इति वि०।

‡ 'महत्सोमं मिश्रयन्ति रश्मयः उदकानि वा'—इति वि०।

अथाष्टमी ।

२३ १　२ ३ १र　२र ३ १ २　३ १ २
परित्यꣳ हर्यतꣳ हरिम्बभ्रुम्पुनन्तिवारेण ।

३ २उ　३　२उ ३ १ २　३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति ॥ ८ ॥ ८६*

३ ४ ३　४　३　४ ५
(द्विरभ्यस्तमाकूपारम् ॥) परित्यꣳ हर्यतꣳ हरिम् ।

३　र　४　३ ४ ३
पा२३४ । रित्यꣳ हौहो५र्यतꣳ हराइम् । बभ्रुम्पुनन्ति

र ४र ५　१　र　र ४र　३र ४र
वारेण । वा२३४ । भ्रुम्पुनौहो५न्तिवारेणा । याढे

"शुक्रा"† शुक्लवर्णानि गो-पयांसि "असुराय"‡ बलवते "निर्णिजे" स्वरूपाय शोधनार्थं "वयन्ति"¶ आच्छादयन्तीत्यर्थः ॥

"शुक्राविथन्त्यसुरायनिर्णिजे"-"शुक्रांवयन्त्यसुरायनिर्णिजम्" —इति साम्न ऋचः पाठौ ॥ ७ ॥ ८५

---

* ७० ५,२,१८,१—८,२,८,३ = ऋ०७,४,२४,१ = ऊहे५,२,१८—५,२,१९—५,२,२० —६,१,१—६,१,२,— ६,१,३—१२,२,१— १२,२,२—१४,२,१६—१४,२,१७—१४,२, १८—१४,२,१९—१४,२,२०—१४,२,२१ —१७,१,८—१७,१,९—१७,२,२—२०,२,४ = ऊह्ये ४,२,२ ।

† 'शुक्राः शुचिष्मन्तः'—इति वि० ।

‡ 'असुराय सुखाय वसुदानवते'—इति वि० ।

¶ वयन्तीति पाठस्तु ऋग्वेदीयः । तमेवावलम्ब्यात्रेऽत्र व्याख्यान भगवता सायणेनेति बोध्यम् । सामवेदीय-पाठस्तु वियन्तीति ।

अथ नवमी।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रस्तुन्वानायान्धसोमर्त्तानवष्टतद्वचः।
३ १ २ ३ १ २ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः॥ ९ ॥ ८७*

॥ प्रथम-दशति ॥

१र ४र ३ ४ ५ १ र र र र ४
वान्विश्वाꣳइत्यरि। यो२३४। देवान्वौहो५श्वाꣳइत्य
३ ४र ३ ४ ५ १ र र
राइ। मदेनसहगच्छति। मा२३४। देनसौहो५ह-
४ ५
ग। च्छा५तोई हाइ॥ २८ ॥ ८६

ऋजिश्वाम्बरीषावृषी†। "हर्यतः" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रु" बभ्रुवर्णं च "त्वं" तं सोमं "वारेण" वालेन पवित्रेण "परि‡ पुनन्ति" परिशोधयन्ति। "यः" सोमः "विश्वान्" सर्वानिन्द्रादीन् "देवानित्" देवानेव "मदेन" मदकरेण रसेन सह "परि¶ गच्छति" इति §॥ ८॥ ८६

* उ० ६,२,३,१—१,९,२२,२ – ऋ० ७,५,२,२ = ऊहे१,२,१७— १,२,१८—६,२,१७—६,२,२०—११,२,२—११,२,३—११,२,१३—१५,१,१६—१६,१,१४— १८,१,१०—१९,२,१९—१९,२,२०—१९,२,२१—२२,२,७ = ऊह्ये २,१,४—३,२,४—६,१,६।

† "ऋजिश्वा भारद्वाजः—अम्बरीषो वार्षागिरः"—इति ऋषि-नि०।

‡ 'परि समन्तात्'—इति वि०।

¶ 'परि देवं लक्षयित्वा'—इति वि०।

§ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

२ १　४र　५　१ २
(वैरूपम् ॥) प्रसुन्वा२३नायअन्धसा: । मर्त्तः ।
१　२ २ ३　५　२ र ३ १　३　५
नवा२ । ष्टतद्वा२३४चा: । अपश्वानमरा । धा२३४सा-
२ १र　२　३ २ ४
म् । हृतामा२३खम् । नभृ३गा५वा६५६: ॥ ३९ ॥ ८७

॥ इति अष्टमः प्रपाठकः ॥

प्रजापतिर्ऋषिः* । "सुन्वानाय" अभिषूयमाणाय [षष्ठ्यर्थे चतुर्थी†] अभिषूयमाणस्य "अन्धसः" सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तान" मर्त्य इव कर्म-विघ्न-कारी "नवष्टन" कामयतां न शृणोत्विति यावत् । तथा हे स्तोतारः "अराधसं" साधक-कर्म-रहितं‡ । "श्वानम्" "अपहत" । तत्र दृष्टान्तः—"मखन"¶ यथा पुरा अराधसं मखम् एतन्नामानं भृगवोऽपहृतवन्तः तथा अपहतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति, "वष्ट"-"वृते"—इति च साम्न ऋचः पाठः ॥ ९ ॥ ८७

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्याष्टमः खण्डः ॥ ५ ॥

॥ इत्यानुष्टुभम् ॥

---

* "वाम्यः"—इति ऋषि-नै० ।

† "षष्ठ्यर्थे चतुर्थीति वाच्यम् (२, ३, ६२)"—इति का० वा० ।

‡ "अधनं धन-रहितम्"—इति वि० ।

¶ "हतामखम्"—इति मन्त्र-पाठस्य 'हता'—'मखम्'—इति पदकारस्य भेदः ।

जगत्योऽभिप्रियाणीति मुख्या द्वादश सम्मताः*।
आद्यास्तिस्र ऋचो दृष्टाः कवि†नाम्ना महर्षिणा।
उत्तरा विप्रकीर्णत्वाद्वक्ष्यन्ते ऋषयः पृथक्‡॥

अथ नवमे खण्डे—

सैषा प्रथमा।

३ १ ३ १ २ ३ १ २ ३
अभिप्रियाणिपवतेचनोहितो
१ २ ३ २उ ३ १ २ १ २
नामानियह्वोअधियेषुवर्द्धते।
१ २र ३ २ ३ २उ ३
आसूर्यस्यबृहतोबृहन्नधि
२ ३ १ २ ३ २
रथंविष्वञ्चमरुहद्विचक्षणः॥ १॥ ८८¶

---

भगवान् सायणोऽपि तथैव व्याख्यातवान्। अत्र नये इतेत्याकारस्य द्व्यचोऽतस्तिङ (६,३, १३५) दीर्घे 'इता'—इति रूपम्॥ विवरणकारस्तु 'इत'—'असखम्'—इत्येवं छेदं स्वीकृत्य 'असखं यज्ञ-वह्निष्कृतम्'—इति व्याचख्यौ।

* अत्र नवमे खण्डे अभिप्रियाणीत्याद्याः द्वादश ऋचः सम्मताः पूर्वाचार्य्याणामिति शेषः।

† "कविः भार्गवः"—इति ऋषि-नै०।

‡ तत्र द्वादशसु आद्यास्तिस्र ऋचः कविनाम्ना महर्षिणा दृष्टाः। उत्तराः ऋचः नैकेन दृष्टा इति तत्र ऋषि-विप्रकीर्णत्वम् तस्मात् तत्र ऋषयः पृथग् वक्ष्यन्ते।

¶ उ० १,१,१९,१=ऋ० ७,२,२३,१= आरण्ये २,१,६ ऊहे =१,१,१२—९,१,२—१४,१,१८—१६,१,१५—१९,१,१४=उह्ये १४,१,१—१४,१,१९।

२र १र २ १र २र ३ ४ ५ २र १
आगोमताइ। व्रजेभ। जातुवन्नाः। हाउः। ३। हउ्हउ्

२ २ऽ २ ३ १ १ १ १
हउ्हउ्। ३। हाउ। ३। वा३। ई२३४५॥ ५॥

२र १ १ २ २र
हाउ। ३। इहा। हउ्हउ्हउ्। ३। हाउ। ३।

२ १ २ १ २र ३ ४ ५ २ १र
इन्द्रन्नरो। ने३मधि। ताहवन्ताइ। यत्पारियाः।

२ १ २ ३ ४ ५ २र १र २ १ २ ३
युनज। ताइधियस्ताः। शूरोनृषा। ता३श्रव। सश्च

४र ५ २र १र २ १र २र ३ ४ ५ २ऽ
कामाइ। आगोमताइ। व्रजेभ। जातुवन्नाः। हाउ।

२ ३ १ १ १ १
३। वा३। ई२३४५॥ ६॥

१ २ १र र र १ ऽ १
* हावीन्द्राम्। नरोनेमधिताह। वा२१। ता२इ।

१ १र र १ १ १
यात्पा२। यीयुनजतेधि। या२१। ता२ः। शूरो२। नृ

र र १ ऽ १ १ १
षाताश्रवसश्च। का२१। मा२इ। आगो२। मतिव्र

र र १ १ ३ ५र र
जेभजातु। वा२३। आ२। ना२३४। औहोवा।

२ १ १ १ १
ई२३४५॥ ७॥

---

* "इन्द्राणा उल्वजरायुणी इ" —इति आ० ब्रा० ३,२,१४।

१　१ २　१　१ ३　४ ५
उवा । औवा । २ । उवा । औवा३ । आइन्द्राम् ।
१र र　र　२　४ ५　१र र
नरोनेमधिताह्वार२३न्ता३ई । यात्पा । र्यायुनजतेधि
२　४ ५　१र र　२　४
या२३स्ता३ः । शूरो । नृषाताश्रवसश्चका२३मा३इ । आ
५　१ र　२　१　१ २
गो । मतिव्रजेभजातुवा२३न्नाः । उवा । औवा । २ ।
१　१　३　५र र　३१११११
उवा । औ२ । वा२३४ । औहोवा । ई२३४५ ॥ ८ ॥

एतेषां व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम् । १—८ ।

२र र　२र　२　२ र　४ २र
* होवाइ । २ । होवा३हाइ । उपत्वाजा३मा३यो
३ ५　२र र　२र　३　२र　४ २
गिरः । होवाइ । २ । होवा३हाइ । देदिशती३र्हा३वि
३ ५　२र र　२र　२　२र र　४
ष्कृत । होवाइ । २ । होवा३हाइ । वायोरनी३का३
२ ३ ५　२र र　२र　२　५र र
अस्थिरन् । होवाइ । २ । होवा३हा३४ । औहोवा ।
३११११
ई२३४५ ॥ ९ ॥
२र र　२र　२　२ र　४　२ ३ ५
औवा । २ । औवा३हाइ । उपत्वाजा३मा२योगिरः

---

* बृहस्पतेर्वा अभिद्री वै, इन्द्रस्य वौद्भिदे वयोः पूर्वम्"—इति आ० ब्रा०३,२,१४ ।

२र र २र २ २र ४ १ ३ ५ २र
ओवा । २ । ओवा३हाइ । देदिशतीरहाँ३विष्कृतः । ओ
र २र २ २र र ४ २ ३ ५ र१
वा । २ । ओवा३हाइ । वायोरनी३का३अस्थिरन् । ओ
र २र २ ५र र ११११११
वा । २ । ओवा३हा३४ । औहोवा । ई२३४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ११३ पृष्ठे द्रष्टव्यम् । ९, १०

२र र २र र र १र २ २र र
* हाउधामयत् । हाहाउधामधामायत् । हाहाउ
र १र २ २ र १ ३ ५ २
बृहद्धामधामायत् । बृहदिन्द्रा । यगा२या२३४ता । मरु
र १ ३ ५ २र र १
तोवृ । चहा२न्ता२३४माम् । येनज्योतिरजनयन् । ऋ
३ ५ २र र र १ ३ ५ २र
ता२वा२३४द्धीः । देवन्देवा । यजा२गृ२३४वी । हाउ
र २र र र १र २ २र र र १र
धामयत् । हाहाउधामधामायत् । हाहाउबृहद्धामधा ।
१ ३ ५र र २ १ ११११
मा२ । या२३४ । औहोवा । ए३ । भर्गा२३४५ः ॥११॥

अस्य व्याख्यानम्—१भा० ५३४ पृष्ठे द्रष्टव्यम् । ११

२र २ र र २ र र
† हाउ । ३ । यशोहाउ । ३ । वर्चोहाउ । ३ ।

---

* "भर्गयशसी द्वे"—इति ष्वा० ब्रा० ३,२,१५ । तत्राद्य मिदम् भर्गम् ।

† द्वितीयञ्चैतद् यशसं साम ( षा० ब्रा० ३, २, १५ ) ।

आस्मिन्हाई। २। आस्मिन्हा३१उ। वा२। तवेदिन्द्रा वमंवसु। त्वम्पुष्यसिमध्यमम्। सत्रा विश्वस्यपरमस्यरा जसि। नकिष्ट्वा गोषुवृण्वते। हाउ। ३। यशोहाउ। ३। वर्चोहाउ। ३। आस्मिन्हाई। २। आस्मिन्हा३१उवा२। आयुर्विश्वायुर्विश्वंविश्वमायुरशीमहिप्रजान्त्वष्टरधिनिधेह्यस्मे शतंजीवेमशरदोवयन्ते२३४५॥ १२॥

अस्य व्याख्यानम्—१भा० ५५७ पृष्ठे द्रष्टव्यम्। १२

* कायमानोवनातुवाम्। यन्मातृरजगानाऽपा२ः। औ२। हौ२। ऊवाइ। औ३हो२३४वा। नतत्ते अग्ने प्रमृषेनिवार्त्ता१ना२म्। औ२। हौ२। ऊवाइ। औ ३हो२३४५वा। यद्दूरेसन्निहाभू१वा२ः। औ२। हौ २। ऊवाइ। औ३हो२३४५वा६५६। ए। राजंस्वराजा २३४५॥ १३॥

* "यामे द्वे"—इति आ० ब्रा० ३,२,१५।

२र १र २र १ ३ ५र र
औहोवा२। २। औ। होऽ२। वा२३४। औहोवा।
१र २र र १र १ २र १र २ १ १ र २ र
कायमानोवनात्वम्। यन्मातृरजगन्नपः। नतत्तेअग्ने
१ र २ १ २ १ २र १र २ १र २ २र १र
प्रमृषेनिवर्त्तनम्। यद्दूरेसन्निहाभुवः। औहोवा२। २।
२र १ ३ ५र र २र २१र २ १र
औ। होऽ२। वा२३४। औहोवा। ए। विराजꣳस्वराजा
११११
२३४५म्॥ १४॥

अनयोर्व्याख्यानम्—१भा० १८० पृष्ठे द्रष्टव्यम्। १३, १४।

२र १ र र १ २ २र
* हाउ। ३। प्रसोमदेवा३वाइता१या२३इ। हाउ।
२ र १ २ २र २ र
३। सिन्धुर्नपिप्ये३आर्णा१सा२३। हाउ। ३। अꣳशोः
र र १ २ २र २ र र
पयसामदिरोना३जागृ१वी२३ः। हाउ। ३। अच्छाकोश
१ २ २ ५ २ २ १ २ १र
म्मा३धूश्चू१ता२३म्। हाउ३। वा। घर्मः प्रवृक्तस्तन्वास
र १ र १र १ १ १ १
मानृधेवृधेसुवा२३४५ः॥ १५॥
१ २ २ १ ५ २ १
औहो३वा। ३। ई३या। ३। आइही२। ३। प्र

* "घर्मतनू हे"—इति आ० ब्रा० ३, ९, १५।

सोमदेववार्इ्ना२३४याइ। सिन्धुर्नपि। प्ये आर्र्षा२३४
सा। अंशोःपयसामदिरः। नजार्गृ२३४वीः। अ
च्छाकोशम्। मधूर्श्चू२३४ताम्। औहोश्वा। ३। ईर
या। ३। आइहीर। आइहीर३। आर्३इ। हार३४।
औहोवा। घर्मःप्रवृक्तास्तन्वासमानशोमहेस्रुवा२३४५ः॥१६॥

अनयोर्व्याख्यानम्—२भा० ८८ पृष्ठे द्रष्टव्यम्। १५, १६

* अयम्पूषा३ओ२३४वा। रयिर्भगः। रयिर्भागा३ओ
२३४वा। चा२३४चूः। सोमःपुना३ओ२३४वा। नोअ
र्षति। नोअर्षति। नोअर्षाता३ओ२३४वा। सू२३४वाः।
पतिर्विश्वा३ओ२३४वा। स्वभूमनः। स्वभूमाना३ओ२३४
वा। ज्यो२३४तीः। वियख्यद्रो३ओ२३४वा। दसीउभे।
दसीऊभा३ओ२३४वा। चा२३४चूः॥ १७॥

* "प्रजापतेस्त्रीणि चचूंषि"—इति ब्रा० ब्रा० ३,२,१५।

२१ १ ३ ५र र २ १ २ २१
अयम् । पूरषा२३४औहोवा । रयिर्भगः । रयिः ।
१ ३ ५र र १र २र१र २ २र१
भा२गा२३४औहोवा । सोमःपुनानोअर्षति । नोअ ।
१ ३ ५र र १ २१र २ २१र १
षा२ता२३४औहोवा । पतिर्विश्वस्यभूमनः । स्यभू । मा२
३ ५र र १ २१र १र १र २१र १ ३
ना२३४औहोवा । व्यख्यद्रोदसीउभे । दसी । ऊ२भा
५र र २ ५ ३र २ १ ३
२३४औहोवा । चा२३४चूः । औहो३१इ । औ२होर३
५ २ ५ २र २ १ ३ ५ ३
४वा । सू२३४वाः । औहो३१इ । औ२हो२३४वा । ज्यो
५ ३र २ १ ३ ५ ३ ५
२३४तीः । औहो३१इ । औ२हो२३४वा । चा२३४चूः ॥१८॥
२र र र १र १ १
एअयम्पूषारयिर्भगाः । सोमःपुना । इहा । नो
१ १ १ २ २ २ १
२अर्षा । इडा । ताइपतिर्विश्वस्यभू१मा३नाः । वियख्य
र १ १२ १ १११११
द्रोदसा२३होइ । ऊभआ३१उवा२३ । इटइडा२३४५ ॥१९॥

एषां व्याख्यानम् -२भा० १५५ पृष्ठे द्रष्टव्यम् । १७—१९

विंशत्यादि सामत्रयं २भा० २९२-२९३ पृष्ठयोर्मुद्रितम् । २०-२२

॥ इति ग्रामे अरण्यगाने द्वितीयः प्रपाठकः ॥

॥ हरिः ॐ ॥

२र र २ ३ ५ ३ ५ ३
* हाउयच्छक्रासी। पारावा२३५ती। ई४य। इया

४ ५ २ ३ ५ २ ३
२३४। इयाहाइ। यादर्वा२३४वा। तांइवृत्रा२३४

५ ३ ५ ३ ४ ५ २ ३
हान्। ई४य। इया२३४। इयाहाउ। आतंस्त्वा

५ २ ३ ५ २ ३ ५ ३
२३४गी। भाइर्द्युगा२३४दि। द्राकेशा२३४इभीः। ई

५ ३ ४ ५ २ ३ ५ २
४य। इया२३४। इयाहाउ। सूतावा७२३४आ। वा

३ ५ ३ ५ ३ ४
इवासा२३४ती। ई४य। इया२३४। इया५हाउ।

५ १ २ १
वा। अश्वमिष्टये३हस्॥१॥

३ ५ ३ १ १ १ १ ४ ५ ४
ई४य। इया२३४५। (एवन्त्रिः)। इयाहाउ। या

३ १ २ ४ ४ ३ ५ ४ ५ १ २ ४
च्छा। क्रा। सी३पा३रावती। यादा। र्वा। वा३ता

२ ३ ५ ४ ५ १ १ २र ४ २र १
३इवृत्रहन्। आताः। त्वा। गीर्भिर्द्युगदी३न्द्रा३केशि

५ ४ ५ १ २ ४ २र ३ ५ ३ ५ ३
भिः। सूता। वा७। आ३वी३वासति। ई३य। इ

---

* "यौते ह यौगते वा"—इति षा० ब्रा० ३, २, १६।

१ १ १ १　　　　　४　　　५　　१　२
या२३४५। (त्रिः)। इया५हाउ। वा। अस्वदिष्टये

१
३हम्॥ २॥

अनयोर्व्याख्यानम्—१भा० ५४७ पृष्ठे द्रष्टव्यम्। १,२

२　　१र　　१　　　१　२
* आ। भीनव। तआ२१३। इहआ३१उवा२३।

३　५　२　१　　१　　　१　२
ई२३४डा। प्रा। यमिन्द्र। स्यका२१२। मियमा३१उवा

३　५　२　१　र　१　　　१
२३। ई२३४डा। वा। त्सनपू। र्व्या२१२। युनि

२　　　　३　५　२　१　　　१
या३१उवा२३। ई२३४डा। जा। तꣳरिह। तिमा२

१　२　　　　१　　१ २ १ १
१२। तरआ३१उवा२३। इट्। इडा२३४५॥ ३॥

३ १र　　२　　　　३　५　　१
अभीनव। तआ३१उवा२३। ऊ२३४हाः। होइ।

१　२र　　　　३　५　　२ १　　　२
हो। वाहा३१उवा२३। ई२३४डा। प्रियमिन्द्र। स्य

३　५　　१　　१　२र
का३१उवा२३। मी२३४याम्। होइ। हो। वाहा३

३　५　　२ १　र　　२
१उवा२३। ई२३४डा। वत्सनपू। र्व्या३१उवा२३।

३　५　　१　　१　　२र　　　　３
यू२३४नी। होइ। हो। वाहा३१उवा२३। ई२३४

---

* "तास्वेन्द्रे इ तास्विन्द्रे वा"—इति स्वा० ब्रा० ३,२,१६।

५ २र १ २ ३ ५
डा। जातꣳरिह। तिमा२१उवा२३। ता२३४राः।
१ १ २र १ ११११
होइ। हो। वाहा२१उवा२३। इट्इडा२३४५॥ ४॥

अनयोर्व्याख्यानम्—२भा० १६४ पृष्ठे द्रष्टव्यम्। ४

२ र र १ २ २र र १
* यदिन्द्रशासोअव्रताम्। च्यावयासदा३सा२३स्य
२ १ २ १ १ २ १
राइ। आ२३स्मा। कम। मघुम्मघा१वा२३न्। पूरु
३ ५ २ १ २ ३र ४र ५ १ २
स्पृ२३४हाम्। वसाव्याआ३४। औहोवा। धा२३इवा
१ ३ ५र र २ ११११
३। हार्वा२३४औहोवा। या२३४५॥ ५॥

२ ४ र ४ ५ २र १ र
या५दिन्द्र। शा३सो३आव्रताम्। च्यावयासा
२ १ २ ३ २ ६ २ २ १ २
२। दसास्या१रा२इ। उवा३। ओ३वा। अस्माका
२ १ २ ३ २ १ २ २ १
१मा२। मघुम्मघा१वा२न्। उवा३। ओ३वा। पुरु
२ २ १ २ ३ २ १ २ ४
स्पृ१हाम्। वसाव्या१या२। उवा३। ओ३वा३। धि
५ ४ ५
वीवा। हा५यो६हाइ॥ ६॥

अनयोर्व्याख्यानम् १भा० ६०४ पृष्ठे द्रष्टव्यम्। ६

---

* "तौरश्रवसे द्वे"—इति आ० ब्रा० ३, २, १६।

२र  र  र  ३र २र  ३र २र  १
* हाउहाउहाउ । ओहा । २ । ओहाइ । इया

२  १ २  ३र २  १  १
हाउ । २ । इयाहाउ । औहो१इ । ३ । भूवत् । इडा ।

२र १  २र १  १  १  २ १
स्वादिष्ठया । मादिष्ठया । जनत् । इडा । पवस्वसो ।

२र१र  १  १  २ र १  २र १
माधारया । वृधत् । इडा । इन्द्रायपा । तावाइसुताः ।

१  १  २र  र  ३र २र  ३र
करत् । इडा२३ । हाउ । २ । हाउ । ओहा । २ । औ

२र  १ २  १ २  ३र २  ३र
हाइ । इयाहाउ । २ । इयाहाउ । औहो१इ । २ । औ

२र  ३  ५र र  २  २र१
हो२ । या२३४औहोवा । ए३ । धेनु ॥ ७ ॥

अस्य व्याख्यानम्—२भा० १० पृष्ठे द्रष्टव्यम् । ७

२  ३ २  १  १  २  २
† इयों३ । इया । इयो२इया । इयो३ । इया ।

२ र  र  २र  २१र  २र१र  २ र
अग्नेयुङ्क्ष्वाहीइयेतवा । अग्नेयुङ्क्ष्वा । हीयेतवा । अग्ने

र  २र  २  २  १  १
युङ्क्ष्वाहीइयेतवा । इयो३ । इया । इयो२ । इया ।

---

* "धेनुपयसी द्वे"—इति आ० ब्रा० ३,२,१६ । तत्रेदमाद्यम् धेनुसाम ।

† द्वितीयमिदम् पयःसाम ( आ० ब्रा० ३,२,१६ ) ।

२ २ २ र र र २र २१र र
इयो३। इया। अश्वासोदाइवा३साधवाः। अश्वासो
१र १र २ र र र २र २
दाइ। वासाधवाः। अश्वासोदाइवा३साधवाः। इयो
२ २ १ २ १ १
३। इया। इयो२इया। इयो३। इया। अ
र २र २ १ २र १र २
रंवहान्ती३आशवाः। अरंवहा। तीयाशवाः। अरं
र २र २ २ १ १
वहान्ती३आशवाः। इयो३। इया। इयो२इया।
१र २ १ १ २ १ १११
इयोइया३उवा३। आ२। ३। हस्एउपया२३४५ः॥ ८॥

अस्य व्याख्यानम्—१भा० १३३ पृष्ठे द्रष्टव्यम्। ८

नवम-दशमे सामनी २भा० २६४-२६५ पृष्ठयोः मुद्रिते। ९, १०

एकादशं साम—२भा० २६७ पृष्ठे मुद्रितम्। ११

द्वादशं साम—२भा० २५६ पृष्ठे मुद्रितम्। १२

२ऽ ऽ ऽ १ २र र १ र २१र
* हाउहाउहाउवा। विश्वतोदावन्विश्वतोनआभ
२ २ऽ १ र २१र २र २ऽ
र। हाउ। ३। वा। यन्त्वाशविष्ठमीमहे। हाउ। ३। वा।
१र २ऽ १र २ऽ १र
आयुः। हाउ। ३। वा। सूवः। हाउ। ३। वा। ज्यो
२ऽ २ २१ ११ १ १
तिः। हाउ। ३। वा३। ई२३४५॥ १३॥

---

* "आयुर्नवस्तोभे द्वे"—इति आ० ब्रा० ३,२, १७। तत्रेदमायुःसाम।

१ २र र　१ र २ १र　३ २र३र र　२र
* विश्वतोदावन्विश्वतोनआ। भराओवा। ३। हा

३र र　२ १　५　२　१
ओवा। ३। हाइओर२३४वा। २। हाउवा। विश्व

२र र　१ र २१र　र　३२र ३र र　२र ३र र
तोदावन्विश्वतोनआभर। भराओवा। ३। हाओवा।

२ १　५　२　१ र　२१र
३। हाइओर२३४वा। २। हाउवा। यन्त्वाशविष्ठमी

१र　३ २र ३र र　२र३र र　२ १
मह। महाओवा। ३। हाओवा। ३। हाइओ

५　२　१र र　३ २र ३र र
२३४वा। २। हाउवा। ईडा। इडाओवा। ३।

२र ३र र　२ १　५　२　१र
हाओवा। ३। हाइओर२३४वा। २। हाउवा। सुवः।

३ २र ३र र　२र ३र र　२ १　५
सुवाओवा। ३। हाओवा। ३। हाइओर२३४वा। २।

२　१र　१र २र ३र र　२र ३र र
हाउवा। ज्योतिः। ज्योताओवा। ३। हाओवा।

२　१　५　२　१
३। हा ३ ओ २ ३ ४ वा। २। हाउवा३। इट् इडा

१ १ १ १
२३४५ ॥ १४ ॥

अनयोर्व्याख्यानम्—१भा० ८८४ पृष्ठे द्रष्टव्यम्। १३,१४

---

* नवस्तोभम् (आ० ग्रा० ६,२, १७)।

१ २ २१र र र र
* एस्वादोः। इत्थाविषूवतोमधोःपिबन्ति गौ२रि
१ १ १र र २ २ २ २१र
याः। इडा। याइन्द्रेणसयाश्वा३रीः। वृष्णामदन्ति
२ ४ ५ १र १ १ २
शो३। भाथा। वस्वीरनुस्वरा२३होइ। जायमा३१उवा
१ ११११
२३। इट्इडा२३४५ ॥ १५ ॥

अस्य व्याख्यानम्—१भा० ८३३ पृष्ठे द्रष्टव्यम्। १५

२ र १र र र १ १
† इन्द्रोमदा। यवावृधेशवसेवृत्रहा२नृभाइ। अ
१ २ २ २ २र १ र २ ४
था। तमिन्महत्स्वा१जा३इषू। ऊतिमर्भेहवा३। मा
५ १र र १ १ २
हाइ। सवाजेषुप्रना२३होइ। वाइषदा३१उवा२३।
३ ५
आ२३४था ॥ १६ ॥

अस्य व्याख्यानम्—१भा० ८४० पृष्ठे द्रष्टव्यम्। १६

१ २ २१र १ १ २र
‡ एस्वादोः। इत्थाविषू२३हो२३। वता२३ः। हा

---

* "रायोवाजीय-बार्हद्गिरे द्वे"—इति आ० ब्रा० ३,२,१७। तत्राद्यमिदम् रायोवाजीयं साम।

† बार्हद्गिरम् (आ० ब्रा० ३,२,१७)।

‡ "सङ्कृतिपार्थुरश्मे द्वे"—इति आ० ब्रा० ३, २, १७। तत्राद्यमिदम् सङ्कृति साम।

१र र २ १ ५ २ १र २
औवा । ३ । हा३औ२३४वा । २ । हाउवा । मधोःपिबन्ति
र १ १र र २ १र २र १ २र १ २ र १ २र
गौर्यः । याइन्द्रेणसयावरीः । वृष्णामदन्तिशोभया ।
१ २र१ २ १र २र ३र र २ १ ५
वस्वीरनुस्वराज्यम् । हाऔवा । ३ । हा३औ२३४वा ।
२ २ २ २ ३१११११
२ । हाउवा३ । हौ३ । आ३ । ऊ३ । ई२३४५ ॥ १७ ॥

१ २ ३ ५ २ १र १ १
* एस्वादोः । औ२३४वा । इत्थाविषू२वताः । अ
ऽ १ २ ३ ५ २ १ १ १
था । एमधोः । औ२३४वा । पिबन्तिगौ२रियाः । अ
ऽ १ २ ३ ५ २र १ १ १
था । एयाई । औ२३४वा । द्रेणसया२वराइ । अ
ऽ १ २ ३ ५ २ १ १ १
था । एवृष्णा । औ२३४वा । मदन्तिशो२भया । अ
ऽ १ २ ३ ५ २ १ १ १
था । एवस्वीः । औ२३४वा । अनुस्वरा२जियाम् । अ
ऽ ११११
था२३४५ ॥ १८ ॥

अनयोर्व्याख्यानम् –१भा० ८२३ पृष्ठे द्रष्टव्यम् । १७,१८–

१ २ २ १ १ १ १
† ऊभाइ । यदिन्द्रो२दसाइ । इडा । आपा ।

---

* पार्थुरश्मम् ( श्या० ब्रा० ३,२, १० ) ।

† "श्येन-वृषके द्वे"—इति श्या० ब्रा० ३,२, १० । तत्राद्यमिदम् श्येनसाम ।

२र १ १ १ १ २ २ १र १
प्राथउषा२इवा। इडा। माहा। तन्त्वामहा२इनाम्।
१ १ २ २ १ १ १ १२
इडा। साम्ना। जच्चर्षणा२इनाम्। इडा। देवी।
२ १ १ १ १ २ २ १
जनित्र्यजा२इजनात्। इडा। भाद्रा। जनित्र्यजा२
१ १ १ १ १ १
इजनात्। इडा२३४५॥ १९॥

अस्य व्याख्यानम्—१भा० ७७८ पृष्ठे द्रष्टव्यम्। १९

१ २ १ २ २ १र १ १
* एस्वादोः। एस्वादोः। इत्थाविषू२वताः। इडा।
१ २ २ १ १ १ १ २ १
एमधोः। २। पिबन्तिगौ२रियाः। इडा। एयाई। एया
२ २र १ १ १ १ २ १ १
ई। द्रेणसया२वराई। इडा। एवृष्णा। एवृष्णा।
२ १ १ १ १ २ १ २ २ १
मदन्तिशो२भथा। इडा। एवस्वीः। एवस्वीः। अनु
१ १ १ १ १ १
स्वरा२जियाम्। इडा२३४५॥ २०॥

अस्य व्याख्यानम्—१भा० ८३३ पृष्ठे द्रष्टव्यम्। २०

१र २ २ १र २ १र १
† होइहा। ३। इहोइहा। ३। औहो२। इहा।

---

* दृषकम् ( आ० ब्रा० ३,१, १०)।

† "भद्रश्रेयसी द्वे"—इति आ० ब्रा० ३,१,१८। तत्राद्यमिदम् भद्रसाम।

१र २र२ २　५र र　२ १र　२र २ र
२ । औहोइहा३४ । औहोवा । इमानुकम्भुवनासीषधे
१　१　२ १ र २ र　१　१र र
मा३ । इहा । इन्द्रश्चविश्वेचदेवा३ः । इहा । होइहा । ३ ।
२ १र र　१र　१　१र २र ३ २
इहोइहा । ३ । औहो२ । इहा । २ । औहोइहा३४ ।
५र र　२　२ १
औहोवा । ए३ । भद्रम् ॥ २१ ॥

१र र　२ १र र　१र　१
* होइया । ३ । इयोइया । ३ । औहो२ । इया ।
१र २र ३ २　५र र　२ १र　२र र
२ । औहोइया३४ । औहोवा । इमानुकम्भुवनासिष
र　१　१　२ १ र २ र १　१　१र
धेमा३ । इया । इन्द्रश्चविश्वेचदेवा३ः । इया । हो
र　२ १र र　१र　१　१र
इया । ३ । इयोइया । ३ । औहो२ । इया । २ । औ
२र ३ २　५र र　२　१र १ १ १ १
होइया३४ । औहोवा । ए३ । श्रेया२३४५ः ॥ २२ ॥

अनयोर्व्याख्यानम्—१भा० ९०३ पृष्ठे मुद्रितम् । २१,२२

२र　२र　२ र
† हाउतन्तुः । ३ । हाउविश्वम् । ३ । अचिक्रदद्वा

---

* श्रेयःसाम ( आ० ब्रा० ३,२,१८ ) ।

† "तन्त्वोतुनी द्वे"—इति आ० ब्रा० ३,२,१९ । तत्राद्यमिदम् तन्तु साम ।

१र २र र र १ २ र र र १
षीहराइ:। महान्मित्रोनादर्शताः। सꣳहरियेणादिद्यु

२र २र २र
ताइ। हाउतन्तुः। ३। हाउविश्वम्। २। हाउ।

१ ३ ५र र २ १ २ १ १ १ १
वा२इ। श्वा२३४औहोवा। ए३। तन्त२३४५ः॥ २३॥

२र र २र र र २ र १र
* हावोतुः। ३। हावैही। ३। अचिक्रदद्वाषाहिरा

२र र र १ २ र र र १
इ:। महान्मित्रोनादर्शताः। सꣳहरियेणादिद्युताइ।

२र र २र र र २र १ ३
हावोतुः। ३। हावैही। २। हाउ। आ२इ। हा२३

५र र २ १र ३ १ १ १ १
४। औहोवा। ए३। ओतू२३४५ः॥ २४॥

अनयोर्व्याख्यानम्—२भा० ५५ पृष्ठे द्रष्टव्यम्। २३,२४

२र २ १र र १ २ ३ ४ ५ २र
† हाउ। ३। पिबासोमाम्। इन्द्र। मन्दतुत्वा। हा

२ १र २ १ २ ३ ४ ५ २र
उ। ३। यन्तेसुषा। वा३हरि। अश्वअद्रीः। हाउ।

२र १ र २ १ २र ३ ४ ५ २१
३। सोतुर्बाहू। भ्या३ꣳसुय। तोनअर्वा। हाउ। ३।

---

* ओतुसाम ( ब्रा० ब्रा० ३,२, १८ )।

† "सहोमहसी द्वे"—इति ब्रा० ब्रा० ३,२, १८। तत्राद्यम् सहःसाम।

२ २र १ २ऽ २ २र २ १ २ऽ
वा। ए। दिशः। हाउ३। वा। ए। प्रदिशः। हाउ३।
२ २र २ १ २ऽ २ २ १ ३ १ १
वा। ए। उद्दिशः। हाउ३। वा३। ए३। महार३
११
४५ः ॥ २५ ॥

२ऽ १ २र१र २ १ २ र २ऽ
* हाउ३वा। पिबासोममिन्द्रमन्दतुत्वा। हाउ३वा।
१ र २१र २ १र २ऽ २र १ २र १
यन्ते सुषावहर्यश्वाद्रिः। हाउ। ३। वा। सोतुर्बाऊ
२र १ २र १र र २ऽ २र१र २ऽ
भ्याᳫंसुयतोनार्वा। हाउ। ३। वा। एभूमिः। हाउ।
२र १ २ऽ २र १र
३। वा। एअन्तरिक्षम्। हाउ। ३। वा। ए। द्यौः।
२ऽ २ १ ३ १ १ १ १
हाउ। ३। वा३। ए३। महार३४५ः ॥ २६ ॥

अनयोर्व्याख्यानम्—१भा० ८२५ पृष्ठे द्रष्टव्यम्। २५, २६

२र र १ २ १ र २
† हाउप्रवइन्द्रायबृहाताइ। मरुतोब्रह्मअर्चता। हा
२ १ २ २ २ १ २ २
उ। वृत्रᳫंहनतिवृत्रहा। हाउ। शा३ताक्रातूरः। हा

* महःसाम (आ० ब्रा० ३,२,१८)।

† "वार्कजम्भे द्वे"—इति आ० ब्रा० ३,२,१८। तत्रेदमाद्यं वार्कजम्भम्।

१ २र १ २ १ २ ५र र २ १
उ। वाज्रेणमा। हाउ। तारपार३४औहोवा। वणा३ह
स्॥ २७॥

२र १ र २र २र१र र १र
* हाउ। ३। विश्वेषाम्। ३। भूतानाम्। ३। स्तो
र २र २ र १ २ १ २ २
भानाम्। ३। प्रवइन्द्रायबृहाताइ। हाताइ। २। मरु
र १ २ १ २ २ र
तोब्रह्मअर्चाता। चाता। २। वृत्रᳫंहनतिवृत्रहाशत
१ २ १ २ २र १ २ १ २
क्रातूः। क्रातूः। २। वज्रेणशतपर्वाणा। र्वाणा। २।
२र १ र २र २र१र र १र र २र
हाउ। ३। विश्वेषाम्। ३। भूतानाम्। स्तोभानाम्।
१र र २र ३र र २ ५र र २ १ १ ११
स्तोभानाम्। स्तोभाना३४। औहोवा। ई२३४५
॥ २८॥

अनयोः व्याख्यानम्—१भा० ५३२ पृष्ठे द्रष्टव्यम्। २७,२८

३र २ २ ५ ४ ५
† हाह। हा३। ओ३४वा। (एवन्विः)। आसा।
१ २ १र २र २ ४ ५ ४ ५ १
विदाइ। वाᳫं३गोक्ष। जीकमन्धाः। नाया। स्मिन्ना

* उत्तरं वार्कजम्भम् (आ० बा० ३,२,१८)।

† "इषविश्वज्योतिषी द्वे"—इति आ० ब्रा० ३,२,१८। तत्रेदमाद्य मिषसाम।

इ । द्रो२जनु । षेमुवोचा । वोधा । मसाइ । त्वा
३हरि । अश्वयज्ञैः । वोधा । नत्तो । मा२मन्ध । सो
मदेषू । हाह । हा३ । ओं२४वा । २ । हाह । हा
३ । ओ३४५वा६५६ । ई२३४५ष ॥ २९ ॥

* ई२यो । ई२यो । ई२यो । ऐही । ऐही । ऐही ।
हुं । हुं । हुं । ओहा । ओहा । ओहाइ । असा
विदाइ । वज्रोदजी२ । कमा२न्धा । ई२यो । २ । ई
२यो । ऐही । २ । ऐही । हुं । ३ । ओहा । २ । ओ
हाइ । नियस्मिन्नाइ । द्रोजनुषे२म् । उवो२वा । ई
२यो । २ । ई२यो । ऐही । २ । ऐही । हुं । ३ । ओ
हा । २ । ओहाइ । वोधामसाइ । त्वाहरिया२ । श्व
यार२ज्ञैः । ई२यो । २ । ई२यो । ऐही । २ । ऐही ।

---

* विश्वज्योतिःसाम ( का० आ० ३,१,१८ ) ।

१ २र २र २र २र २र २र १ २र १
हुं । ३ । ओहा । २ । ओहाइ । बोधानस्तो । माम

२ १ १ १ २र २र
न्वसो२ । मदा२इषू । ई२यो । २ । ई२यौ । ऐही ।

२र २र १ २र २र २र २र १ १
२ । ऐही । हुं । ३ । ओहा । ओहा । ओ३हाउ ।

२ २ २ १ र ३ १ १ १ १
वा३ । ए३ । विश्वज्योती२३४५: ॥ ३० ॥

अनयोर्व्याख्यानम्—१भा० ६२८ पृष्ठे द्रष्टव्यम् । २९ ३०

॥ इति ग्रामे अरण्यगाने तृतीयस्यार्द्धः प्रपाठकः ॥

---

॥ हरिः ॐ ॥

२र १ १ १र २र २र २र
* हाउमही । ३ । मही२महि । ३ । माहेमाहे ।

१ र र १ २र र १र २ १
३ । महित्रीणामवा२रस्तु । औहोहोवा२ । द्युक्षमित्र

१ २र र १र २ र १ १
स्या२र्यम्णाः । औहोहोवा२ । दुराधर्षं वरु२णस्या ।

२र र १र २र १ १ १र
औहौहोवा२३ । हाउमही । ३ । मही२महि । ३ । मा

---

* "द्रविण विस्सर्ज्जनी द्वे"—इति षा० ब्रा० ३, २, १९ । तयोरिदं द्रविणम् ।

२र ३र २र    २ १    १ ३    ५र र    २र
हेमाहे। २। महि। मा२हा२३४औहोवा। ए।

१    २र    १ ३ १ १ १ १
महि। २। ए। महीऽ२३४५॥१॥

२र    १ र    १    १र २र ३र २र
* हाउदिवी। ३। दिवी२दिवि। ३। दाइवेदाइवे।

१ र र    १    २ १    १    २
३। महित्रीणामवा२रस्तु। द्युक्षमित्रस्या२र्यम्णः। दु

र १    १    २र    १    १
राधर्षं वरु२णस्या। हाउदिवी। ३। दिवी२दिवि।

१र २र ३र २र    २ १    १ ३    ५र र
३। दाइवेदाइवे। २। दिवि। दा२इवा२३४औहोवा।

२र    १    २र    १ ३ १ १ १ १
ए। दिवि। २। ए। दिवीऽ२३४५॥२॥

अनयोर्व्याख्यानम्—१भा० ४२० पृष्ठे द्रष्टव्यम्। १,२

२र र    २ र र    २र १ २ २    १ २र १
† औहोइ। इयाहाउ। औहोहो३वा। नाकेसु

२ १ २    २र र    २ र र    २र १
पा। णमुपयत्पतन्तम्। औहोइ। इयाहाउ। औहो

२ २    १ २र १र    २र १ २ र    २र    २
हो३वा। हार्दाविना। तोऽभ्यचक्षतत्वौ। होइ। इ

---

* विसर्द्ध:साम (आ० ब्रा० ३, २, १९)।

† याम-माधुच्छन्दसे द्वे"—इति आ० ब्रा० ३,२,१९। तत्रेदं यामम।

२ र २र १ २ २ १ २१ २ १ २
याद्दाउ। औद्दौद्दो३वा। द्दाइरण्यपा। द्दंवरूणस्य

र २र र २र र २र १ २ २ १ २ १
दूतम्। औद्दोइ। इयाद्दाउ। औद्दौद्दो३वा। यामस्य

२र १ २ २र र २र र १र
यो। नौश्नकुनग्भुरण्युम्। औद्दोइ। इयाद्दाउ। औ

१ २ २ २ ३ १ १ १ १ १
द्दौद्दो३वा। द्दाउवा३। ई२३४५॥ ३॥

अस्य व्याख्यानम्—१भा० ६४६ पृष्ठे द्रष्टव्यम्। ३

२ र १ २र १ २र १ २र १ २ १ २
* सुरूपकृत्नुमूतये सुदुघामा। वर्गो२। दुहया३१

३ ५ ३ ५ २ १र २ १
उवार२३। ई२३४डा। सू२३४वाः। जुह्रमा२३सी। द्य

२ ३ ५
विद्यविया३१उवा२३। ज्यो२३४तीः॥ ४॥

अस्य व्याख्यानम्—१भा० ३६६ पृष्ठे द्रष्टव्यम्। ४

पञ्चम-षष्ठे सामनी २भा० २६९-२७० पृष्ठयोर्मुद्रिते। ५, ६

सप्तमं साम २भा० २७१ पृष्ठे मुद्रितम्। ७

२र २ १ २ १ २ २ १
† हाउ। ३। चन्द्रम्। ३। चन्द्रंचन्द्रम्। २। चन्द्रं

---

* आयुश्छन्दसं साम (आ० ब्रा० ३,२,१९)।

† "प्रश्नचन्द्रे द्वे"—इति आ० ब्रा० ३,२,१९। तत्रेदमुत्तरं चन्द्रं साम।

२ ३ २ १ २ ३ २ १ १ २ र र
चन्द्रम्। चन्द्रं चान्द्रम्। २। चन्द्रं चान्द्रम्। अत्राहगो

१ २ २र १ २ २ र
रा३मान्वा१ता २। नामत्वष्टुरा३पाइचा१या २म्। इत्था

१ २ २र २ १ २ १
चन्द्रमा३सोगृ१हा२३इ। हाउ। ३। चन्द्रम्। ३। चन्द्रं

२ २०१ २ ३ २ १ २ ३ २
चन्द्रम्। २। चन्द्रं चन्द्रम्। चन्द्रं चान्द्रम्। २। चन्द्रम्।

१ ३ ५र र २र २ १
चार। द्रा२३४। औहोवा। ए। चन्द्रम्॥ ८॥

अस्य व्याख्यानम्—१भा० ३४४ पृष्ठे द्रष्टव्यम्। ८

नवमादि-पञ्चविंशान्त्यानि सप्तदश सामानि १भा० २७३ प्रभृति २८१ पृष्ठेषु मुद्रितानि। ९—२५

॥ इति ग्रामे अरण्यगाने तृतीयः प्रपाठकः॥

---

॥ इति द्वन्द्व-नाम द्वितीयं पर्व समाप्तम्॥

---

॥ हरिः ॐ ॥

२ र र २र र १ २र र
* ऊवेवाचाम् । वाचंवाचꣳऊवे२ । वाक्श्टणोतु

र १ २र र र १ २र १ २र
श्टणोतुवा२क् । वाक्समैतुसमैतुवा२क् । वाग्रमता

१ २र १ ३ २ ५र र २र १र
म् । रमताम् । रमा२३ । तुवा३४औहोवा । ई२डा ।
३ ॥ १ ॥

२ १ २र १ २र १ १र १र
† ऊवाइवाचाम् । वाचꣳऊवाइ । वाक्श्टणोतू२३ ।

४ २र ३ ५र २र १र ४ २र ३५र २र
श्रा३र्णो ।तुवाक् । वाक्समैतू२३ । सा३मैतुवाक् । वाग्र

२ ३ २ ५र र ३ १ १ १ १
मता२३म् । रमं । तुवा३४औहोवा । मा२३४५इ ॥ २ ॥

अनयोर्मूलं न ऋक्, अपि तु स्तोभः सर्वैषः—

३ २ १ २र १ २र ३ २ ३ १ २
ऊवे । वाचम् । वाचम् । ऊवे । वाक् । श्टणोतु ।

---

* "वाचोव्रते द्वे"—इति आ० ब्रा० ३,२, २० । तत्राद्य मिदम् ।

† उत्तरं वाचःसाम ( आ० ब्रा० ३,२, २० ) ।

३ १ २　　　　　　　　　३ १ २　　३ १ २
शृणोतु। वाक्। वाक्। समैतु। समैतु। वाक्।

१ २र　　१ २र　　　　३　　२
वाक्। रमताम्। रमतु। वाक्। मे। वाक्॥२॥१॥१,२

२र १र　४　　५　　१ २र　१ २　　२
* आतूनार२इन्द्रवृत्रहन्हाउ। आस्माकमाहाउ। धा

२र १ २　　१ २र १ २　　३ २　　१
मागहाहाउ। माहान्महाहाउ। भिरूइ। ता२३४इ

५　　५　　५　　५　　१ १ १ १ १र
भाइ। उऊवाईहाउ। वा। अस्फटमृस्हस्वाक्।

३ १ १ १ १
ऊ२३४५॥ ३॥

अस्य व्याख्यानम्—१भा० ४०४ पृष्ठे द्रष्टव्यम्। ३

२र र र र र र र　　२　　१ २ १र २
† औहोवाऔहोवाऔहो३वा। अगन्मज्योतिः। २।

१ २ १र　　　२ १ र २ र　　　२ १ र २ र र
अगन्मज्योतिः। अमृताअभूम। २। अमृताअभूमा।

१ २　१र　र　२र र　　　१　२　१र　र
तरिक्षम्पृथिव्याअध्यारुहामा। २। तरिक्षम्पृथिव्याअध्यारु

२र　१ २ १　२र १ र　२र　　　१　२र　र १र
हाम। दिवमन्तरिक्षाद्ध्यरुहाम। ३। अविदामदेवान्।

---

* "अगस्त्य कार्पूं अयस्य व्रतम्"—इति आ० ब्रा० ३, २, २०।

† "सचस्वर्द्धिः"—इति आ० ब्रा० ३, २, २०।

१ २र१र २ २र र र र र र र २
३। समुदेवैरगन्महि। ३। औहोवाऔहोवाऔहो३वा।
१ र ३१११११
सुवर्ज्योती२३४५:॥ ४॥

अस्य मूलं न ऋक्, अपि तु स्तोभः। स चैषः—

२ १२र १ २र २ १ २ २ १ २र २
उ। अगन्म। ज्योतिः। अमृताः। अ। मृताः। अ
१ २ २ २ १ २ २
भूम। अन्तरिक्षम्। पृथिव्याः। अधि। आ। अरु
१ २र २ १ २ १ २र २
हाम। दिवम्। अन्तरिक्षात्। अधि। आ। अरु
१ २र ३ २ २ २ २
हाम। अविदाम। देवान्। सम्। उ। देवैः। अग
न्महि॥ २॥ २॥ ४

२ र १ र १ २ १ र २ १ र
* इममूषू। त्वमस्मा। काम्। सनिङ्गायत्रन्नव्याᳬ
२ १ २र र १ २ १ ३ ५र र ३ ११
सम्। आग्नेदेवाइ। प्रप्रा२वो२३४औहोवा। चा२३
११
४५:॥ ५॥

अस्य व्याख्यानम्—१भा० १३६ पृष्ठे द्रष्टव्यम्। ५

* 'प्रजापतेः प्रतिष्ठा"—इति आ० ब्रा० २, २, २०।

२र २र२ र३ ५र र २ २र१र
* हाउ। ३। एवाहियेवा२३४औहोवा। ए३। भूताया

१११ १ २र २र२ र३ ५र र २
२३४५। हाउ। ३। एवाहियेवा२३४५औहोवा। ए३।

२र१र १११ १ २र २र२ र ३ ५र र
रूपाया२३४५। हाउ। ३। एवाहियेवा२३४औहोवा।

२ १र ३११११ २र २र२ र ३ ५र र
ए३। आयुषे२३४५। हाउ। ३। एवाहियेवा२३४औहो

२ १र ३११११
वा। ए३। ज्योतिषे२३४५ ॥ ६ ॥

अस्य मूलं न ऋक्, अपितु स्तोभः ; सर्वेषः—

३२ ३२ ३१२ ३१२ १ २र १ २र
एव। हि। एव। भूताय। रूपाय। आयुषे। ज्योति

षे॥२॥३॥६

सप्तमं साम—२भा० २८४ पृष्ठे मुद्रितम्। ७

२र २ २ १२१२ १ २
† सोमासो३मा। ३। यत्रचक्षुः। तदाभा१रा२।

१२१र२ १ २ १२१र२ १ २
यत्रश्रोत्रम्। तदाभा१रा२। यत्रआयुः। तदाभा

१२र१ १ २ १२१२ १
१रा२। यत्ररूपम्। तदाभा१रा२। यत्रवर्चः। तदा

२ १२१र२ १ २ १२१र२
भा१रा२। यत्रतेजः। तदाभा१रा२। यत्रज्योतिः।

---

* व्याहृतीस्व"—इति आ० ब्रा० ३, २, २०।

† "परमेष्ठिनः प्राजापत्यस्य व्रतम्"—इति आ० ब्रा० ३, २, ३०।

१ २ १र २ २ १र २ २
तदाभा१रा२। सोमासो३मा। २। सोमारा३जा३न्।

१ २ ५र र १ १ १११
हो२हा२३४औहोवा। ई२३४५वा॥ ८॥

अस्य मूलं न ऋक्, अपितु स्तोभः; सचैषः—

१ २र १ २र ३ १ २र १ २र
सोमसोम। सोम। सोम। यत्र। चक्षुः। तत्। आ।

३ १ २र ३ २ ३ १ २र
भर। यत्र। ओत्रम्। तत्। आ। भर। यत्र।

१ २र ३ १ २र ३ २
आयुः। तत्। आ। भर। यत्र। रूपम्। तत्। आ।

३ १ २र १ २र ३ १ २र १ २
भर। यत्र। वर्च्चः। तत्। आ। भर। यत्र। तेजः।

३ १ २र १ २र ३
तत्। आ। भर। यत्र। ज्योतिः। तत्। आ। भर।

१ २र ३
सोम। राजन्॥ २॥ ५॥ ८

नवमं साम २भा० २८४ पृष्ठे मुद्रितम्। ९

दशमं साम—२भा० २८५ पृष्ठे मुद्रितम्। १०

२र १ २ २ १ २ १र र
* हाउ। ३। वाग्ददद। ददा२या। इन्द्रोराजा।

२ १ २ ३ ४र ५ २ १ २ १ र २ ३ ४
जगतः। चर्षणीनाम्। अधिक्षमा। विश्वरू। पंयद

* "भरद्वाजस्य व्रतम्"—इति आ० ब्रा० ३, २, २१।

५ २ १र २ १र २ ३ ४र ५ २र १ र
स्था । ततोददा । तोऽ३दाभु । षाड्वसूनी । चोदद्रा

२ १ २ ३ ४ ५ २र १ २
धाः । उपस्तु । तश्चिदर्वाक् । हाउ । ३ । वाग्ददद ।

२ २ ३ १ १ १ १ १
ददा २या३ । हाउवा३ । ई२३४५ ॥ ११ ॥

अस्य व्याख्यानम्—२भा० २४७ पृष्ठे द्रष्टव्यम् । ११

२र १र ऽ १र २ १र १र ऽ
* हाउ । ३ । वाजऽम् । २ । वाजम् । ए । वाज२म् ।

१र २ १ १र ऽ १र २ १
३ । वाजम् । ए२ । वाज२म् । ३ । वाजम् । ए२ ।

१र ऽ १र २ १र २ १
वाज२म् । वाजमो २इ । (त्रिः) । वाजम् । विवी २वि

२ १ १ १ २ १ २ १र
वि । ३ । विविहो २इविवि । ३ । व्यश्नवाइवि । ३ । अभी

१ ३ २र १ २ १
नवन्तआ २ । द्रूहा२ः । द्रूहोऽहुहः । ३ । प्रियमिन्द्रस्य

१ ३ २ १ २ १ र १
का २मायाऽरम् । मियम्मियम् । ३ । वत्सन्नपूर्वआ २यूनी

३ २र १ २र १ १
२ । युनीयुनि । ३ । जातᳫरिहन्तिमा २तारार२ः । तरो

१ २र १र ऽ १र २ १
तरः । ३ । हाउ । ३ । वाज२म् । २ । वाजम् । ए२ ।

---

* "भरद्वाजिनां व्रतम्"—इति आ० ब्रा० ३, २, २१ ।

१र ऽ १र २ १ १र ऽ १र २
वाज२म्। ३। वाजम्। ए२। वाज२म्। ३। वाजम्।
१ १र ऽ १र २ १र २
ए२। वाज२म्। वाजमो२३। ३। वाजम्। विवी२
१ २ १ १ १ २ १
विवि। ३। विपिहो२३विवि। ३। व्यश्नवाइवि। २।
१ २ २ २र २ १र र २र २ १र
व्या२३श्नवाउ। वा। ए। सुधामधाम। २। ए। सुधाम
र १ १ १ १
धामा२३४५॥ १२॥

अस्य व्याख्यानम्—२भा० १६४ पृष्ठे द्रष्टव्यम्। १२

त्रयोदशं साम २भा० २८० पृष्ठे मुद्रितम्। १३

२र २ १ ५ २
* हाउ। ३। हा३। ओ२३४वाक्। (त्रिः)। ओम्।
१ २ १ ५ २र र
३। ओम्। ३। हा३। ओ२३४वाक्। ३। एआयुः। ३।
१र १ र र र १ १ र र
आयु। ३। इन्द्रन्नरोनेमधिताहवा२न्ताइ। यत्पार्यायुन
र १ १र र र र १ १र र
जतेधिया२स्ताः। शूरोनृषाताश्रवसश्चका२माइ। आगो
र र १ २र २ १ ५
मतिव्रजेभजातुवा२न्नाः। हाउ। ३। हा३। ओ२३४वाक्।

* "यमव्रते द्वे"—इति आ० ब्रा० ३, २, २१। तत्रे दमुत्तरम्। "अङ्गिरसां व्रोतरम्"—इति च आ० ब्रा० ३, २, २१।

२ १ २ १ ५
( त्रिः )। ओम् ।३। ओम् । ३। हा३। ओ२३४वाक् । ३।
२र र १र ३र २ ५र र २र
एआयुः। ३। आयुः। २। आयू३४। औहोवा। ए।
२र १र २ १ २ र १र र र ३ १ १ १ १
आयुर्द्धाअस्मभ्यंवर्चोधाढेवेभ्या२३४५ः ॥ १४ ॥

अस्य व्याख्यानम् –१भा० ६३२ पृष्ठे द्रष्टव्यम् । १४

२र २ र २ र र
* होइहा३। इहोइहा३। (एवन्त्रिः)। इमाउवा
र १ २ २र र र १ २ २
न्दिविष्टयाओहाउ। उस्राहवन्तेअश्विनाओहाउ। अयं
र र र र र १ २ २ र १
वामह्वेवसेशचीवसूओहाउ। विशंविशꣳहिगच्छथाओ
२ २र २ र २र २ र
हाउ। होइहा३। इहोइहा३। २। होइहा३। इहो
५र र १ऽ १ २र ३र २
इहा३४। औहोवा। ई५होहीहोहीहि ॥ १५ ॥

१ ३ २ १ ३ २ २ र र
† होइहा। इहोइहा। (एवन्त्रिः)। इमाउवान्दिवि
र १ २ २र र र १ २ २ र
ष्टयाहोहाउ। उस्राहवन्तेअश्विनाहोहाउ। अयंवा-

---

* "अश्विनोर्व्रते द्वे"—इति आ० ब्रा० ३, २, ११। तत्रेदमाद्यम्।

† अश्विनोर्व्रतमुत्तरम ( आ० ब्रा० ३, २, २१ )।

२ २ २ १ २ २ २ १ २
मर्क्के वतेशचीवहहोहाउ। विशंविशꣳहिगच्छथाहोहा

१ ३ २ १ ३ २ १ ३ २ १ ३ २
उ। होइहा। इहोइहा। २। होइहा। इहोइहा३

५२ २ १
४। औहावा। ई२। ३॥ १६॥

अनयोर्व्याख्यानम्—१भा० ६१३ पृष्ठे द्रष्टव्यम्। १५, १६

सप्तदशं साम २भा० २८९ पृष्ठे मुद्रितम्। १७

अष्टादशं साम २भा० २८७ पृष्ठे मुद्रितम्। १८

२र २ र १र र २१र
* हाउ। ३। प्सुवन्तरा। ३। कोज्योतिः। अर्क्का-

र २ र २ १ २
ज्योतिः। २। सुवर्द्धनुः। ३। कश्यपस्यसू३वार्वा१इदा२ः।

२र र १ २ २र १ २
यावाङ्ःसयू३जावा१इती२। ययोर्विश्वमा३पाइव्रा१ता२

२ रर १ २ २र २
म्। यज्ञन्धीरानी३चाआ१या२३। हाउ। ३। प्सुव

र १र र २१र र २ र
न्तरा। ३। कोज्योतिः। अर्क्काज्योतिः। २। सुवर्द्धनूः।

१ र १र ३र२ २ १ १११
२। सुवर्द्धनुः। औहोवाहाउ। वा३। इटइडा२३४५॥१९

---

* "कश्यपव्रते द्वे"—इति आ० ब्रा० ३, २, २१। ततेदमाद्यम्।

२र १ २ ३ १
* हाउ। ३। ऊ२। ३। कक्का२उ। ३। काश्यपस्यस्तुवा
२ २र र १ २ २ र १
२३र्विदाः। यावाङ्कःसयू३जावा१इती२। ययोर्विश्वमपा
२ २ र र १ १ २र
२३इव्रताम्। यज्ञन्धीरानी३चाआ१या२३। हाउ३।
१ २ २ १ १
ऊ२। ३। कक्का२उ। २। कक्का२३उ। क्काउवा३।
३ १ १ १ १
ई२३४५॥ २०॥

अनयोर्व्याख्यानम्—१भा० ७३० पृष्ठे मुद्रितम्। १९;२०

॥ इति ग्रामे अरण्यगाने चतुर्थस्यार्द्धः प्रपाठकः॥

॥ हरिः ॐ॥

२र १ २ २र २ र र
† हाउ। ३। इन्द्रा३१२३म्। हाउ। ३। नरोने
र १ २ २ १ २ २ १ २ १
मधिताहवान्ताइ। हवान्ताइ। हवान्ता३इ। ओइ।
२ ४ ५ १ २र २र १ २ १र २ र २र
हवन्ताइ। वन्ता। औहोवा। एहिया। हाउ। ३।

* उत्तरं काश्यपव्रत मिदम् (आ० ब्रा० ३, २, २१)।

† "अङ्गिरसां व्रते द्वे"—इति आ० ब्रा० ३, २, २२। तत्राद्य मिदम्।

१ २ २र २र र १ २ २ १ २
यत्या३१२३। हाउ। ३। यौयुनजतेधियास्ताः। धियास्ताः।
२ १ २ २ ३ ४ ५ १ २र २र १ २
धियास्ता३ः। औ३इ। धियस्ताः। यस्ता। औहोवा।
१र २ र २र १र २ २र १र र
एहिया। हाउ। ३। भूरो३१२३। हाउ। ३। नृषाता
१ २ २ १ २ २ १ २ २
अवसअकामाइ। चकामाइ। चकामा३इ। औ३इ।
३ ४र ५ १र २र २र १ २ १र २ र २र
चकामाइ। कामा। औहोवा। एहिया। हाउ। ३।
१र २ २र २ र र १ २ २
आगो३१२३। हाउ। ३। मतिव्रजेभजातुवान्नः। तु
१ २ २ १ २ १ ३४ ५ १ २र १२
वान्नः। तुवान्ना३ः। औ३इ। तुवन्नाः। वन्ना। औ
१ २ १र २ र २ऽ २ ३ १ १ १ १
होवा। एहिया। हाउ। ३। वा३। ई२३४५॥ १॥

अस्य व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम्। १

२र १ २ १ २ १ २
* हाउ। ३। हाहाउ। ३। इहाहाउ। ३। इयाहाउ।
१ ऽ २ २ २ १ र २र र र १ १
२। इया३हाउ। वा। अभित्वाशूरनोनुमोहस्। अदु
२र र १र १र र २ १ २ १ १र र २
ग्धाइवधेनवोहस्। ईशानमस्यजगतःस्वर्दृशꣳहस्। ईशान

* आङ्गिरसां व्रत मुत्तरम् (आ० ब्रा० ३, २, २१)।

१ र    १ २र १ २ १ २१    १ १    २ १
मिन्द्रतस्थुषोहस् । सहस्रांत्सहसस्पतिरदिव्यवद्दस् । स्वर्जि

र २१रर१र २ १    २र    १ २    १
द्धाजसातमोदिद्यवद्दस् । हाउ । ३ । हाह्माउ । ३ । इहा

२    १ २    १ ऽ २    २ १र
हाउ । ३ । इयाहाउ । २ । इया३हाउ । वा । इडाहस्

र
हस्इडा ॥ २ ॥

अस्य व्याख्यानम्—१भा० ४८० पृष्ठे द्रष्टव्यम् । २

तृतीय-चतुर्थे सामनी २भा० २९३ पृष्ठे मुद्रिते । ३, ४

१ऽ    १र    २ र१र र २१    र र
* हाउ३वा । प्रागन्यदनुवर्त्ततेरजोपागन्यत्तमोपे

२ १र    २र    २    र    १ २
षतिभ्यसा । हाउ । ३ । उदुत्यञ्जाता३वाइदा१सार३

२ऽ    १र    २ र१ रर२१    रर२
म् । हाउ३वा । प्रागन्यदनुवर्त्ततेरजोपागन्यत्तमोपेष

१ र    २र    २र    १ २
तिभ्यसा । हाउ । ३ । देवंवहन्ती३काइता१वा२३: ।

२ऽ    १र    २ र१र र२ १ रर २ १र
हाउ३वा । प्रागन्यदनुवर्त्ततेरजोपागन्यत्तमोपेषतिभ्यसा ।

२ऽ    २र र १२    २ऽ
हाउ । ३ । दृशेविश्वाया३सूरा१यार३म् । हाउ३वा ।

* "अहोरात्रयोर्व्रते द्वे"—इति आ० आ० २, २, २२ । तत्राद्यमिदम् ।

२र १ र २ १र २र १ र २ १ र२र १ २र २ १ १
ए । अरूरुचदुषसः । अरूरुचदुषसान्दिविसूर्यो । विभाती २ ३
१ १
४ ५ ॥ ५ ॥

अस्य व्याख्यानम्—१भा० १४० पृष्ठे द्रष्टव्यम् । ५

षष्ठं साम २भा० २९६ पृष्ठे मुद्रितम् । ६

सप्तमं साम २भा० २९७ पृष्ठे मुद्रितम् । ७

अष्टमं साम २भा० ३०१ पृष्ठे मुद्रितम् । ८

२र १ २ १ २
* हाउ । ३ । ऊ२ । ३ । षी । ३ । इयाहाउ । ३ ।
२ १ २ १र २ ३ ४ ५ २ १ २
उदुब्रह्मा । णीऽरऐर । तश्रवस्या । इन्द्र(ं)समा । यैं३
१ २र ३ ४ ५ २र १र २ १ २र ३ ४र
मह्व । यावसिष्ठा । आयोविश्वा । नीऽश्रव । सातता
५ २ १ र २ १र २र ३ ४र ५ २र
ना । उपश्रोता । मईव । तोवचा(ं)सी । हाउ । ३ ।
१ २ १ २ १ऽ २ २
ऊ२ । ३ । षी । ३ । इयाहाउ । २ । इयाऽहाउ । वा३ ।
३ १ १ १ १
ई२३४५ ॥ ९ ॥

२र १ २ २
† हाउ । ३ । ऊ२ । ३ । षी । ३ । इयो । ३ ।

---

* "वसिष्ठव्रते द्वे"—इति आ० ब्रा० ३, २, २२ । तत्राद्यमिदम् ।

† उत्तरं वसिष्ठव्रतम् ( आ० ब्रा० ३, २, २२) ।

२ १र १र　२ १र र २　१ ऽ　१　२ १र
इयोवा । ३ । इयोवाहाइ । ३ । उदू२ । २ । उदु । उदो
र　२ १र र २　१　२ १र　२
वा । ३ । उदोवाहाइ । ३ । ब्रह्मा । णी३ऐर । त
२　१र र　१र र २र
अवस्था । स्था । २ । स्थोवा । ३ । स्थोवाहाइ । ३ ।
१ ऽ　१　२ १र र　२ १र र २
इन्द्र२म् । २ । इन्द्रम् । इन्द्रोवा । ३ । इन्द्रोवाहाइ ।
१　२ १　२र　१र र
३ । समा । यैं३मच्च । यावसिष्ठा । २ । ष्ठोवा । ३ ।
१र र २र　१र ऽर　१र　१र १र र
ष्ठोवाहाइ । ३ । आयो२ । २ । आयः । आयोवा ।
२र १र र २　१　२ १　२र र
३ । आयोवाहाइ । ३ । विश्वा । नी३अव । सातता
२　१र र　१र र २र　१ ऽ
ना । ना । २ । नोवा । ३ । नोवाहाइ । ३ । उप२ । २
२ १र र　२ १र र २　१र　२१र　२र
उपोवा । ३ । उपोवाहाइ । ३ । ओता । मई्व । तो
र　२　१र र　१र र २र
वचा५सी । सी । २ । सोवा । ३ । सोवाहाइ । ३ ।
२र　१　२　२　२ १र र
हाउ । ३ । ऊ२ । ३ । षी । ३ । इयो । ३ । इयोवा ।
२ १र र २　२ १र र ऽ२　२　३ १ १
३ । इयोवाहाइ । २ । इयोवा३हाउ । वा३ । ई२३
१ १
४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ९७० पृष्ठे द्रष्टव्यम् । ९,१०

२र १र र २ १ २ १रर र २
* हाउ। ३। विश्वाधनानिसञ्जित्यवृत्रहाभूर्यासुतिः।

१ १र र २ १ २ १रर र २ १
होइ। विश्वाधनानिसञ्जित्यवृत्रहाभूर्यासुतिः। होइ।

१ र र २ १ २ १र र र २ १ २ १ र
विश्वाधनानिसञ्जित्यवृत्रहाभूर्यासुतिः। होइ। उरुघोष

२ र र १ १ २ १ र २ र र १ १
च्चक्रं लोकम्। होइ। उरुघोषच्चक्रं लोकम्। होइ।

२ १ र २ र र १ १ २ १ र र २र १र र २
उरुघोषच्चक्रं लोकम्। होइ। वृत्रमेभ्योलोकेभ्योनुनु

र १ १ २ १ र र २र १र र २ र १
दानः। होइ। वृत्रमेभ्योलोकेभ्योनुनुदानः। होइ।

२ १ र र २र १र र २ र १ १ २ १ २
वृत्रमेभ्योलोकेभ्योनुनुदानः। होइ। इन्द्रन्नरो। ने

१ २र ३ ४ ५ २ १र २ १ २
३मधि। ताहवन्ताइ। यत्पारियाः। युनज। ताइ

३ ४ ५ २र १र २ १ २ ३ ४र ५ २र
धियस्ताः। शूरोनृषा। ताइश्रव। सश्वकामाइ। आ

१र २ १र १र ३ ४ ५ २र १ र
गोमताइ। व्रजेभ। जातुवन्नाः। हाउ। ३। विश्वा

र २ १ २ १र र र २ १ २ १ र
धनानिसञ्जित्यवृत्रहाभूर्यासुतिः। होइ। ३। उरुघोष

२ र १ र १ २ १ र २र १र र २ र १
च्चक्रंलोकम्। होइ। ३। वृत्रमेभ्योलोकेभ्योनुनुदानः।

---

* "इन्द्रस्य सञ्जयम्"—इति आ० ब्रा० ३, २, २२।

१ २१र र२र१र र २ र १ १ २
होइ। २। वृत्रमेभ्योलोकेभ्योनुनुदानः। हो२। वा२३४।
५र र २र २१ २ १र २१ २र १
औहोवा। ए। वृत्रञ्जघन्वाᳬंअपतद्ववारयत्तमः। २।
२र २१ २१र २१ २र १ ११११
ए। वृत्रञ्जघन्वाᳬंअपतद्ववारयत्तमा२३४५ः॥ ११॥

अस्य व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम्। ११

द्वादशं साम २भा० ३०३ पृष्ठे मुद्रितम्। १२

१ २१र २र २ ५
* ए३१। ४। प्रवोमहाइ। महेवृधाइभरा२३४धाम्।
१ २ २१र २ २
चौ। ४। ए३१। ४। प्रचेतसाइ। प्रसुमताइकृणू२३४
५ १ २ २१र २
ध्वाम्। चौ। ४। ए३१। ४। विशःपूर्वाइः। प्रचरचर्ष
२ ५ १ २ २ २
णा२३४इप्राः। चौ। ४। ए३१। २। ए३१२। आ२३४।
१र र २र २१र २र १
औहोवा। ए। व्रतमेसुवसुवरेशकुनः॥ १३॥

अस्य व्याख्यानम्—१भा० ९२२ पृष्ठे द्रष्टव्यम्। १३

१ १र र १र र २र
† ए३। ५। योवा। ५। योवाहाइ। ५।

---

* "प्रजापतेस्त्रयस्त्रिंशत् सम्मितम्"—इति आ० ब्रा० ३, २, २३।

† "चतुस्त्रिंशत् सम्मितम्"—इति आ० ब्रा० ३, २, २१। प्रजापतेरित्येव।

२ १ २ १ २र ३ ४ ५ १ १र र
इन्द्रन्नरो। ने३मधि। ताहवन्ताइ। ए२। ५। योवा।
१र र २र १र ऽ २ २ १
५। योवाहाइ। ४। योवा३हाउ। वा। त्वौ। ३।
१ १र र १र र २र २ १र
ए२। ५। योवा। ५। योवाहाइ। ५। यत्पा
२ १ २ ३ ४ ५ १र र
रियाः। युनज। ताइधियस्ताः। ए२। ५। योवा।
१र र २र १र ऽ २ २ १
५। योवाहाइ। ४। योवा३हाउ। वा। त्वौ।
२ १र र १र र २र २र
३। ए२। ५। योवा। ५। योवाहाइ। ५। शू
१र २ १ २ ३ ४र ५ १ १र
रोनृषा। ता३श्रव। सश्वकामाइ। ए२। ५। यो
र १र र २र १र ऽ २ २
वा। ५। योवाहाइ। ४। योवा३हाउ। वा।
१ १ १र र १र र २र
त्वौ। ३। ए२। ५। योवा। ५। योवाहाइ।
२र १र २ १र २र ३ ४ ५ १
५। आगोमताइ। व्रजेभ। जातुवन्नाः। ए२। ५।
१र र १र र २र १र ऽ २ २
योवा। ५। योवाहाइ। ४। योवा३हाउ। वा।
२र २ १ र २र १
ए। व्रतमेसुवरेशकुनः ॥ १४ ॥

अस्य व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम्। १४

१र १ २ १ २ १
* हाउ। ३। हहाउ। ३। हहहाउ। ३। कपार
२ १ २ २ १ र
३उ। ३। हा३ओ२३। २। हा३१उवा२। अभित्वा
र २ १ १ ३ ५ २र र
पूरनो३। ३। आउ। वा२३। नू२३४माः। ईडा।
१र २ १ २र १ २ १र २ १ २ १ र २र १र
३। ज्योतिष्पतस्वपतान्तरिक्षम्पृथिवीम्पश्चप्रदिशश्चक्षीन्देवा
१ र २ ३ ५
न्वर्षम्। अदुग्धाइवधा३१उवा२३इ। ना२३४वाः।
२र र १र २ १ २र १ २ १र २ १ १
ईडा। ३। ज्योतिष्पतस्वपतान्तरिक्षम्पृथिवीम्पश्चप्रदिश
१ र २र १र १र र २ २
श्चक्षीन्देवान्वर्षम्। ईशानमस्यजगतःसुवा३१उवा२३। दृ
५ २र र १र २ १ २र १ २
२३४शाम्। ईडा। ३। ज्योतिष्पतस्वपतान्तरिक्षम्पृथि
१र २ १ २ १ र २र १र १र र २
वीम्पश्चप्रदिशश्चक्षीन्देवान्वर्षम्। ईशानमिन्द्रवा३१उवा
३ ५ २र र १र २ १ २र १
२३। स्वू२३४षाः। ईडा। ३। ज्योतिष्पतस्वपतान्तरि
२ १र २ १ २ १ र १र १र १र १ २
क्षम्पृथिवीम्पश्चप्रदिशश्चक्षीन्देवान्वर्षम्। हाउ। ३। हहा

---

* "अजदग्ने व्रतम्"—इति आ० ग्रा० ३, १, १२।

उ। ३। हुहहाउ। ३। कपार३उ। ३। हा३ओर३। २। हा३१उवा२। ए। व्रतमेसुवरेशकुनः॥ १५॥

अस्य व्याख्यानम्—१भा॰ ४७८ पृष्ठे द्रष्टव्यम्। १५

* हाउहाउहाउ। ओहा। २। ओहा। हाओवा। ३। ऊ२। ३। ओ२। ३। हाउवाक्। ३। आयुर्यन्। ३। एआयुः। ३। आयुः। ३। वयाः। २। वयः। इन्द्रन्नरोनेमधिताहवा२न्तात्। यत्पार्यायुनजतेधिया२स्ताः। शूरोनृषाताश्रवसश्चका२माद्। आगोमतिव्रजेभजातुवा२न्नाः। हाउहाउहाउ। ओहा। २। ओहा। हाओवा। ३। ऊ२। ३। ओ२। ३। हाउवाक्। ३। आयुर्यन्। ३। एआयुः। ३। आयुः। ३। वयाः। २।

* "अभ्यस दमस्तोभम्"—इति आ॰ ब्रा॰ ३, २, २१।

१ २ ५र र २र २र १र२१ १
वा२। या२३४। औहोवा। ए। आयुर्द्धाअस्मभ्यंव

र१र र र २ १११
र्चोधादेवेभ्या२३४५ः॥ १६॥

अस्य व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम्। १६

सप्तदशं साम—१भा० ३०५ पृष्ठे मुद्रितम्। १७

२ १ २र १ २र १
* अभिप्रब्रा। तमोजसा। तमोजासा२। एवं

२र १ २र१ २र १ १
त्रिः। तमोजसा। सुवोजासा२। २। तमोजसा। सु

र १ २ ५र र १ र २र१
वो। जा२। सा२३४। औहोवा। असिप्राणएअसि।

२र१ र २ ५ २र१
३। एअसि। ३। सत्यमित्थावृषा२इदा२३४सी। एअसि।

२र १ २ ५र र १र २ १र १.१र
२। ए। आ२। सा२३४। औहोवा। इडाङ्गच्छसूर्यङ्गच्छे।

१र२ १र २ १र १र२ १र २ १ २
डाङ्गच्छसूर्यङ्गच्छे। डाङ्गच्छसूर्यङ्गच्छ। अभिप्रब्रा।

२र१ २र
तमोजसा। तमोजासा२। एवन्त्रिः। तमोजसा।

२र१ २र१ २र १ २
सुवोजासा२। २। तमोजसा। सुवो। जा२। सा२३४।

---

* "प्रजापतेर्वाहावित्रिधनम्"—इति षा० ब्रा० ३, २, २२।

५र र १ १र १ २र१ १
औहोवा । असिचक्षुरेअसि । ३ । एअसि । ३ । वृष

र २ ५ २र१र २र १ २
जूतिर्नो२वार२३४इता । एविता । २ । ए । वा२इ । ता

५र र २ १ २ १र२र१ र २
२३४ । औहोवा । अन्तरिक्षङ्गच्छनाकेविभाहि । ३ ।

२ १ २र १ २र १ १ र
अभिप्रघ्न । तमोजसा । तमोजासा२ । ३ । तमो

१ २र १ २र १ १र १
जसा । सुवोजासा२ । २ । तमोजसा । सुवो । जा२ ।

२ ५र र १ र २र १ २र१
सा२३४ । औहोवा । असिश्रोत्रमेअसि । ३ । एअसि ।

१र र २ ५ २र१
३ । वृषाह्यग्रभ्दृष्णिषेपरा२वा२३४तौ । एवति । २ । ए ।

१ २ ५र र १ २ १र २
वा२ । ता२३४ । औहोवा । स्वर्गच्छज्योतिर्गच्छ । ३ ।

२ १ २ र १ २ र १ २ र १
अभिप्रघ्न । तमोजसा । तमोजासा२ । ३ । तमोजसा ।

२ र १ २ र १ २र १ २
सुवोजासा२ । २ । तमोजसा । सुवो । जा२ । सा२३४ ।

५र र १ र १र १ २र १ १ र
औहोवा । असिज्योतिरेअसि । ३ । एअसि । ३ । वृषो

र २ ५ २र १ २र १ २
अर्वावता२इश्रू२३४ताः । एश्रुतः । २ । ए । श्रू२ । ता२

५र र   १ र र २र १ १

३४। औहोवा। अतिज्योतिर्विभाह्यैअति। २। अति

र र २र१ ३ १ १ १ १

ज्योतिर्विभाह्यैअतीर२३४५॥ १८॥

अस्य व्याख्यानम्—१भा० ५४५ पृष्ठे द्रष्टव्यम्। १८

१ १ १ २र २र

* ऊम्। ३। हो। ३। हुं। ३। औहा। ३।

२ र २र २र २ १ २ १ २र

औहाइ। २। औहोइ। इन्द्रन्नरो। ने३मधि। ता

३ ४ ५ १ र २ १ १ ३ २ र १ २ र

हवन्ताइ। ३। वयोवृहत्। ३। विभ्राष्टयेविधर्मणे। ३।

२ १र २ १ २ ३ ४ ५ २ १ र

यत्पारियाः। युनज। ताद्दधियस्ताः। सत्यमोजः।

१ २र १र २ १ २ ३ ४र ५

३। रजःस्तुवः। ३। प्रूरोनृषा। ता३श्रव। सश्वकामा

२ १ र २१ र १र १

इ। ३। भद्रंसुधा। २। भद्रंसुधे। षमूर्जम्। इष

र २र १र २१र २र ३ ४ ५

मूर्जम्। २। आगोमताइ। व्रजेभ। जातुवन्नाः।

२ १ २ १ २ १ २ १ २

३। बृहद्यशः। ३। दिविदधे३हस्। २। दिविदधे३।

१ १र र र र र र २ ३ १ १ १

हाउवा। वागीडासूवोबृहद्भा२३४५ः॥ १९॥

---

* "इन्द्रस्य राजन-रौहिणे द्वे"—इति ष्या० ब्रा० ३, ९, २३। तत्र राजनमिदम्।

* हाउ। ३। आइही। ३। आइहिया। ३। आसाउ। ३। आयाम्। ३। नामाः। ३। किट्। किट्। इन्द्रन्नरोनेमधिताहवा२न्ताइ। यत्पार्यायुनजतेधिया२स्ताः। शूरोनृषाताश्रवसश्चका२माइ। आगोमतिव्रजेभजातुवा२न्नाः। मना२३होइ। प्राणा२३होइ। चक्षू२३होइ। श्रोत्रा२३होइ। घोषा२३होइ। व्रता२३होइ। भूता२३होइ। पाना२३होइ। चित्ता२३होइ। धीता२३होइ। सुवा२३होइ। ज्योता२३होइ। वा२३४औहोवा। ऊ२३४५॥ २०॥

अनयोर्व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम्। १९, २०

॥ इति ग्रामे अरण्यगाने चतुर्थः प्रपाठकः॥

---

* "इन्द्रस्य राजन-रौहिणे द्वे"—इति आ० ब्रा० ३, २, २१। तयोरुत्तर मिदं रौहिणम्।

॥ हरिः ॐ ॥

२र                १            १         १   २
* हाउ । ३। ऊ२ । ३। ऊऊ२ । इयाहाउ ।

१  ऽ  २         ३        १      १११
२। इया३हाउ । वा३ । इट्इडा२३४५ ॥ १ ॥

अस्य मूलं न ऋक्, अपि तु स्तोभः सचैषः—

२
ऊ ॥ २। १। ५

द्वितीय-तृतीये सामनि—१भा० ३०७-३१० पृष्ठयोः मुद्रिते । २,३

१            १  २              २१           २  १
† इया२ । ३। इयाहाउ । ३। इन्द्रन्नरो । नेऽम

२र३४५          २           १        २र  ३र   २
धि । ताहवन्ताइ । हवन्ते३ । हऌहऌहाऌहाऌहऌ ।

१  र        २१र          २१         १     ३ ४ ५
३। हवन्ते । ३। यत्पारियाः । युनज । ताइधियस्ताः ।

१            १       १र   ३र    २           १   र
धियस्ता३ः । हऌहऌहाऌहाऌहऌ । ३। धियस्ताः ।

२र १र          २  १        २ ३ ४र ५       २ र
३। शूरोनृषा । ता३श्रव । सश्वकामाइ । चकामे३ ।

१       २र  ३र   २           १  र  र         २र १र
हऌहऌहाऌहाऌहऌ । ३। चकामे । ३। आगोमताइ ।

---

* "अग्नेरिलान्दं पश्चानुगानम् ।    इराग्नं वा"—इति आ० ब्रा० ३, २, २४ । तत्र प्रथम मिदम् ।

† "अग्नेरिलान्दं पश्चानुगानम्"—इति आ० ब्रा० ३, १, २४ । तत्र चतुर्थ-मिदम् ।

२ १र २र ३ ४ ५ २ १ २र ३र
व्रजेभ। जातुवन्नाः। तुवन्नाऽ३ः। हउ२हउ२हाउ२हाउ२

२ १ १ १ २
हउ२। ३। तुवन्नः। ३। इया२र। ३। इयाहाउ। २।

१ ऽ २ २ २र २ १ र २र १
इया३हाउ। वा। ए। व्रतमेसुवरेशकुनः॥ ४॥

अस्य व्याख्यानम्—१भा० ६४२ पृष्ठे द्रष्टव्यम्। ४

पञ्चमं साम—२भा० ३१२ पृष्ठे मुद्रितम्। ५

१ २ १ १ २ १ १ २ १
* अधिप। ताइ। मित्रप। ताइ। क्षत्रप। ता

१ २ १ १ २ १ १ २ १ र
इ। स्वःपताइ। धनपता२इ। ना२माः। मन्युना

२ १र र र २ १र २ १र २ १ १ २र १ २र १र ० १र र २र
वृत्रहासूर्येणस्वराडयज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञा-

१ २र र २ १ र २ १र २ र १ २ १ र ० १ २ १र
विशन्दाधार। वृषभस्त्वष्टात्वत्रेणशचीपतिरन्नेनगयःपृथिव्या

२ १र र २र १ १ २ र र १ र र २ १र
स्वणिकोग्निनाविश्वभ्भूतम। भ्यभवोवायुनाविश्वाःप्रजाअभ्य

२ र र १र र २ १र ८ र २ र १र २र र १र
पवथावषट्कारेणार्द्धभाक्सोमेनसोमपाःसमित्यापरमेष्ठी।

१र र २र र र २ १ २ १ र र २र र र र १र २र १ २
येदेवादेवाः। दिविषदः। स्थतेभ्योवोदेवादेवेभ्योनमः।

र १र र र २ १ २ १ र र २र र र र १र २र
येदेवादेवाः। अन्तरिक्षसदः। स्थतेभ्योवोदेवादेवेभ्यो

---

* "देवानां व्रतानि। देवस्य वा। रौद्रं पूर्वं, वैश्वदेवं तृतीयम्। वैश्वदेवं वा पूर्वं, रौद्रं तृतीयम्"—इति आ० ब्रा० २, ३, २४।

१ २　　१र र १र र र　　२ र १ २　　१ र र २र
नमः । येदेवादेवाः । पृथिवीषदः । स्थतेभ्योवो
र र र १र २र १ २　　१र र २र र र　　१ ११　　१ र
देवादेवेभ्योनमः । येदेवादेवाः । अप्सुषदः । स्थते
र २र र र र १र २र १ २　　१र र २र र र　　२ १ २
भ्योवोदेवादेवेभ्योनमः । येदेवादेवाः । दिच्चुसदः ।
१ र र २र र र र १र २र १ २　　१र र २र र र　　२र २र
स्थतेभ्योवोदेवादेवेभ्योनमः । येदेवादेवाः । आशा
१ २　　१ र र २र र र र १र २र १ २　　१ २ १र　२
सदः । स्थतेभ्योवोदेवादेवेभ्योनमः । अवज्यामिव
१　२र १ र २ १ २र　　१र　२　१ २ १ २　　१
धन्वनोवितेमन्युन्नयामसिन्द्रतान्नइहअस्मभ्यम् । इडा२३
२　１　र　२　१　१　३
भा । यद्दद विश्वम्भूतम् । युयो३ । आउ । वा२३ । ना२
५
३४माः ॥ ६ ॥

१ २　१　　१ २　१　　१ २
अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ता
१ २१　　२　　१　१　१ २ १
इ । स्वःपताइ । धनपता२इ । ना२माः । नमउत्तितिभ्य
२र　र १र　२ १ र २र　१　२र　र १　२ १ र
श्चोत्तन्वानेभ्यश्चनमोनीषङ्गिभ्यश्चोपवीतिभ्यश्चनमोस्यद्ग्भ्य
२ १ र २र　१　२ १　२　र १　२ १२ १ २
प्र । निदधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमःत्सरद्भ्यश्च

र १ २१ १ १र २र१ ११२१ २र १
त्वारिभ्यश्चवनमःश्वी। तेभ्यश्चश्वायिभ्यश्चनमन्तिष्ठद्भ्यश्चोपति

२ १र२१र २ १र२१ २१र२१ २र १२१र
ष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेचविपथायच। अवज्या

२१ २र१र२१ २र १र२ १२१२ १
मिवधन्वनोवितेमन्युन्नयामसिम्टडतान्नइहअस्मभ्यम्। इडा

२ १ र २ १ १
२३भा। यइदंविश्वम्भूतम्। युयोः३। आउ। वा२३।

२
ना२३४५मा:॥ ७॥

१ २ १ १ २ १ १ २ १
अधिप। ताइ। मित्रप। ताइ। क्षत्रप। ता

१ २१ २ १ २ १र र
इ। स्वःपताइ। धनपता२इ। ना२माः। नमोन्ना

२१ र २ रर १र २र र १र २१२र१ २१र
यनमोन्नपतयएकात्राय चावपन्नादायचनमोनमः। रुद्रा

२र १२र१ २१र २१ २र१२१ २र १र२
यतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेच

१२१ २र २१र२१ २र र१र २ र र
नमस्त्रियम्बकायचक्र। पर्दिनेचनमश्चाश्चायेभ्यश्चप्रत्याश्वा

१र २१ २१र २ १र २१ २१र२१२र १
येभ्यश्चनमःक्रव्येभ्यश्चविरिम्फिभ्यश्चनमःसंवृतेविवृतेच। अ

२१र २१ २र१र२१ २र १र२ १२१२
वज्यामिवधन्वनोवितेमन्युन्नयामसिम्टडतान्नइहअस्मभ्यम्।

१ २ १ र २ १ १
इडा२३भा। यद्दद विश्वम्भूतम्। युयो३। आउ। वा

३ ५
२३। ना२३४माः ॥ ८ ॥

एतेषां षष्ठादि-त्रयाणां साम्नां मूलानि न ऋचः, अपितु स्तोभाः, ते चैते—

१ २ १ १ ३ १ २र २र ३ १ २र
अधिपते। अधि। पते। मित्रपते। मित्र। पते। क्षत्र

१ २र ३ १ २ १ २ ३
पते। क्षत्र। पते। स्वःपते। स्वाऽ३रिति। पते।

१ २र १ २र ३ १ २र ३ १ २ ३ २ ३
धनपते। धन। पते। नमः। मन्युना। वृत्रहा। वृत्र।

२ १ २र ३ २ ३ २ ३ १२ ३ १
हा। सूर्य्येण। स्वराट्। स्व। राट्। यज्ञेन। मघ

२ १ २र ३ २ ३२ १ २र १
वा। दक्षिणा। अस्य। प्रिया। तनुः। राज्ञा। वि

२र ३ २ १ २र ३ १ २ ३ १
शम् दाधार। वृषभः। त्वष्टा। वृत्रेण। शची

२ ३ १ २र १ २र १ २र ३ २
पतिः। शची। पतिः। अनेन। गयः। पृथिव्या।

३ २ ३ १ २ १ २र ३ २ ३ २ ३
क्षणिकः। अग्निना। विश्वम्। भूतम्। अभि। अ

१ २ १ २र ३ २ ३ २ ३ २
भवः। वायुना। विश्वाः। प्रजाः। प्र। जाः। अभि।

३ १ २ ३ १ २ ३ २
अपचयाः। वषट्कारेण। वषट्। कारेण। अर्द्धभाक्।

अर्द्ध। भाक्। सोमेन। सोमपाः। सोम। पाः। समि
त्धा। सम्। इत्वा। परमेष्ठी। परमे। स्थी। ये। देवाः।
देवाः। दिविषदः। दिवि। सदः। अन्तरिक्षसदः।
अन्तरिक्ष। सदः। पृथिवीषदः। पृथिवी। सदः।
अप्सुषदः। अप्सु। सदः। दिक्षुसदः। दिक्षु। सदः।
आशासदः। आशा। सदः। स्थ। तेभ्यः। वः। देवाः।
देवेभ्यः। नमः। अव। ज्याम्। इव। धन्वनः। वि।
तेभ्यः मन्युम्। नयामसि। मृड़ताम्। नः। इह।
अस्मभ्यम्। यः। इदं। विश्वम्। भूतं। युयो। नमः॥०॥
नमः। उत्ततिभ्यः। उत्। ततिभ्यः। च। उत्तन्वाने
भ्यः। उत्। तन्वानेभ्यः। च। नमः। नीषङ्गिभ्यः। नी।
सङ्गिभ्यः। च। उपवीतिभ्यः। उप। वीतिभ्यः। च।
नमः। अस्यद्भ्यः। च। प्रतिदधानेभ्यः। प्रति। दधाने

३ १ २र ३ १ २ ३ १ २ ३ १
भ्यः । च । नमः । प्रविध्यद्भ्यः । च । प्रव्याधिभ्यः । प्र । व्याधि

२र ३ १ २ १ २र ३ १ २ ३ १ २र
भ्यः । च । नमः । त्सरभ्यः । च । त्सारिभ्यः । च । नमः ।

३ १ २ ३ १ २ ३ १ २र १ २र ३
श्रितेभ्यः । च । आयिभ्यः । च । नमः । तिष्ठद्भ्यः । च ।

१ २ ३ १ २र ३ १ २र ३ २ ३ ३
उपतिष्ठद्भ्यः । उप । तिष्ठद्भ्यः । च । नमः । यते । च । वि

२ ३ २ ३ १ २र ३ २ ३ १ २
यते । वि । यते । च । नमः । पथे । च । विपथाय । वि ।

२ ३ १ २र १ २र १ २र १ २र
पथाय । च ॥०॥ नमः । अन्नाय । अन्न । पतये । अन्न ।

३ १ २ ३ १ २ २ १ २
पतये । एकाह्नाय । एक । अह्नाय । च । अवपन्नादाय ।

३ १ २ ३ १ २र १ २र ३ १ २
अव । पन्नादाय । च । नमः । नमः । रुद्राय । तीर

१ २ ३ १ २र १ २र ३ १ २ ३ १ २
सदे । तीर । सदे । नमः । स्थिराय । स्थिरधन्वने ।

३ २ ३ १ २ १ २र १ २र ३
स्थिर । धन्वने । नमः । प्रतिपदाय । प्रति । पदाय ।

१ २ ३ १ २ १र ३
च । पटरिणे । च । नमः । त्र्यम्बकाय । त्रि । अम्ब

१ २ ३ १ २र ३ १ २
काय । च । कपर्द्दिने । च । नमः । आम्नायेभ्यः ।

च। प्रत्याम्रायेभ्यः। प्रति। आम्रायेभ्यः। च। नमः। संवृते। सम्। वृते। च। विवृते। वि। वृते। च॥२॥१॥५

नवमं साम—२ भा० ३१३ पृष्ठे मुद्रितम्। ९

* हाउ। ३। ऊप्। ३। बिबिबिबिबी३। ३। हौ२। ३। हाउ३वा। अभित्वाशूरनोनुमोहस्। अदुग्धाइव धेनवोहसं। ईशानमस्यजगतःस्वर्दृशं३हस्। ईशानमिन्द्रतस्थुषोहस्। हाउ। ३। ऊप्। ३। बिबिबिबिबी३। हौ२। ३। हाउ३वा। एअस्। एफट्। एमृस्। एहस्। ई२३४५॥१०॥

अस्य व्याख्यानम्—१भा० ४७८ पृष्ठे द्रष्टव्यम्। १०

एकादशं साम—२भा० २८४ पृष्ठे मुद्रितम्। ११

† आयाउ। ३। अक्रांत्समुद्रःप्रथमाइविधर्मान्। वि

* "अजितस्य जितिः"—इति षा० ब्रा० ३, २, २४।

† "दीर्घतमसस्य व्रतम्"—इति षा० ब्रा० ३, २, २४।

२ १ २ १ र ३ २र १ ३ २र १ ३
धर्मान् । २ । जनयन्प्रजाभुवनास्यगोपाः । स्यगोपाः । स्य

२र १ १ र र ३र ११ ३र २ १
गोपाः । वृषापवित्रे अधिसानो अव्याइ । नो अव्या

१ २ १ र र र र २र २ १
इ । २ । आयाउ । ३ । बृहत्सोमोवावृधेसुवानो अद्रा

३र २ १ २र २ २र र १र
इ । नो अद्राइ । नो अद्रा३१उवा२३ । ए३ । धेसानो

१ १ १ १
अद्रीर२३४५ः ॥ १२ ॥

अस्य व्याख्यानम्—२भा० १२२ पृष्ठे द्रष्टव्यम् । १२

त्रयोदशादि-सप्तदशान्तानि पञ्च सामानि—२भा० ३१५ –३२१ पृष्ठेषु मुद्रितानि । १३—१७

२र १ २ १ २ १ २ १ २
* हाउ । ३ । अस्मीनस्मिन् । ३ । नृम्णाइनृम्णाम् ।

१ २ २ र १ २
३ । निधाइमाहे । ३ । कयानश्चित्रा२आभू१वा २त् ।

२र र र १ २ २ र १ २
ऊतीसदावृ३धास्सा१खा २ । कयाशचिष्ठा३यावा१र्त्ता

२र १ २ १ २ १ २ १ २
२३ । हाउ । ३ । अस्मीनस्मिन् । ३ । नृम्णाइनृम्णाम् ।

---

* "द्वे पुरुषव्रते । पञ्चानुगानञ्चैकानुगानञ्च"—इति आ० ब्रा० २, २, १५ । तत्रेदं द्वितीयम्,—'एकानुगानं पुरुषव्रत'मिति ।

१ २ १ १ ३
३। निधाइमाहे। २। निधार३इ। मा२। हा२३४।
५र र १ १ १ १
औहोवा। सुवर्ज्योती२३४५ः॥ १८॥

अस्य व्याख्यानम्—१ भा० ३८४ पृष्ठे द्रष्टव्यम्। १८

ऊनविंशतितमं साम—२ भा० ३२२ पृष्ठे मुद्रितम्। १९

१ १ २र १ २ र १ २
* वाक्। २। वागीयम्। कयानश्चित्रा३आभू१वा
२र र र १ २ २र १
२त्। ऊतीसदावृ३धाःसा१खा२। कयाशचिष्ठा३या
२ १ १ २र १ ३ ५र र
वा१र्त्ता२। वाक्। २। वागीया२। वा२३४औहोवा।
२र २ १ २र १ र २र ३ १ १ १ १
ए। अन्तरिक्षेसलिलंलं लाया२३४५ ॥ २०॥

अस्य व्याख्यानम्—१ भा० ३८४ पृष्ठे द्रष्टव्यम्। २०

एकविंशतितमं साम—२ भा० ३२३ पृष्ठे मुद्रितम्। २१

द्वाविंशतितमं साम—२ भा० ३२४ पृष्ठे मुद्रितम्। २२

॥ इति ग्रामे अरण्यगाने पञ्चमस्यार्द्धः प्रपाठकः॥

---

* "त्रीणि लोकानां व्रतानि दिवोऽन्तरीक्षस्य पृथिव्याः"—इति ब्रा० ब्रा०३, २, १५। तदेदं द्वितीय मन्तरीक्षस्य व्रतमिति।

॥ हरिः ॐ ॥

प्रथमादीनि दश सामानि—२ भा० ३२५—३३१ पृष्ठेषु मुद्रितानि। १—१०

२र १ १ १ २
* हाउ। ३। हा२इ। ऊ२। त्रिः। काक्कक्क
१ १ १ १ऽ
क्क। ३। हा२इ। ऊ२। ऊ२। ऊर। एवन्त्रिः।
१ २ १ऽ २र १र
काक्कक्कक्कक्क। ऊ२। एवन्त्रिः। हाउ। ३। यस्येद
र र १ २१र र १ २र
मारजोयू२जाः। तुजेजनेवनꣳसू२वाः। हाउ। ३।
१ १ १ २ १
हा३इ। ऊ२। ३। काक्कक्कक्कक्क। ३। हा२इ।
१ १ १ ऽ १ २ १ ऽ
ऊ२। ऊ२। ऊ२। त्रिः। काक्कक्कक्कक्क। ऊ२।
२र २ ३ २ ४
३। हाउ। ३। आइन्द्रस्यर। तियार३वृ५हा६५६त्।
१ १ १ १ १
नमःसुवरिडार३४५॥ ११॥

अस्य व्याख्यानम्—२भा० २४८ पृष्ठे द्रष्टव्यम्। ११

२र १ २ १ २ १ २ १ २ १ २
† हाउ। ३। अहोअहो। अहो। आहोआहो।

---

* "कश्यपव्रतं दशानुगानम्"—इति आ० ब्रा० ३, २, २७।

† "कश्यपग्रीवा द्वितीयम्"—इति आ० ब्रा० ३, २, २७।

१ २ ११ १२ १२ २ २ ११र र

आहो। एहोएहो। एहो। वा३। हाउवा। प्रजाभू

२र १ ११११

तमजीजने३। इटइडा२३४५॥ १२॥

अस्य मूलं न ऋक्, अपितु स्तोभः ; सवैषः—

३र १ २ ३र १ २ ३र १ २ ३ २ २

अहोइति। आहोइति। एहोइति। प्रजाः। प्र।

२ ३ २ २

जाः। भूतम्। अजीजने॥ २॥ १॥ ८॥

२र १ २ २र

* हाउ। ३। फाल्फल्फल्फल्फल्फल्। ३। हाउ।

१ र र र १ १ र र र

३। इन्द्रन्नरोनेमधिताहवा२न्ताइ। यत्पार्यायुनजतेधि

१ र र र १ १र र

या२स्ताः। शूरोनृषातात्रवसश्चका२माइ। आगोम

र र १ २र १ २

तिव्रजेभजातुवा२न्नाः। हाउ। ३। फाल्फल्फल्फल्फल्फ

२५ २ १ २ ११११

ल्। ३। हाउ३वा। मनःसुवरिडा२३४५॥ १३॥

अस्य व्याख्यानम्—१भा० ६४१ पृष्ठे द्रष्टव्यम्। १३

३ १ र २र र र र २र

† हाउ। ३। हाउहौहौहौहौहौ। ३। हाउ।

---

* "कश्यपव्रतं दशानुगानम्"—इति आ० ब्रा० ३, २, २७। तच्चेदं तृतीयम्।

† "कश्यपव्रतं दशानुगानम्"—इति आ० ब्रा० ३, २, २७। तच्चेदं चतुर्थम्।

